॥ श्रीः ॥

# अथ वाक्यसुधाप्रारम्भः ।



श्रीगणेशायनमः ॥ नमोरामायदेवायसच्चिदानंदमूर्तये ॥ कृष्णायगुरवेव्यासशंकराचार्यमूर्तये ॥ १ ॥ नामरूपात्मविश्वाख्यपंको यद्ब्रह्मईक्ष्यते ॥ तद्वाक्यसुधयाप्लाव्यनिष्पंकंतत्समीक्ष्यताम् ॥ २ ॥ पदार्थबुद्धिर्वाक्यार्थज्ञानहेतुरितिस्थितः ॥ आदौपदार्थबुद्ध्यर्थःपरिच्छेदःप्रवर्तते ॥ ३ ॥ वाक्यंतत्त्वमसीत्यादिप्रत्यग्ब्रह्मैकबोधकम् ॥ त्वंपदार्थइहप्रत्यक्तत्पदार्थोमहेश्वरः ॥ ४ ॥

तत्रादौवाक्यसुधाख्यं प्रकरणमारभमाणोयं भगवान्भाष्यकारः त्वंपदार्थंव्युत्पादयति । रूपंदृश्यमित्यादिभिःपंचभिः श्लोकैः । तत्राद्योयंवस्तुसंग्रहश्लोकः—

**रूपंदृश्यंलोचनंदृक्तद्दृश्यंदृक्तुमानसम् ॥**
**दृश्याधीवृत्तयःसाक्षीदृगेवनतुदृश्यते ॥ १ ॥**

रूपंनीलपीतादियत्प्रसिद्धंतद्दृश्यंद्रष्टृवृत्तिव्याप्यमित्येतदविवादमित्यर्थः । कापुनः साद्दग्ययारूपंव्याप्यते इत्यपेक्षाया माह ॥ लोचनंदृगिति ॥ यल्लोचनंनेत्रेंद्रियं सादृगित्येतदपिप्रसिद्धमेव नेत्रान्वयव्यतिरेकानुविधायित्वाद्रूपज्ञानस्येत्यर्थः । एतावतापुत्रआत्माजायात्मेत्याद्यातिप्राकृतात्मदृष्टिर्बाह्यविषयाभिनिविष्टप्रच्याविता[1] । तेनैवदेहात्मबुद्धिरपिव्युदस्ता[2] । देहस्यापिबाह्यविषयवदिंद्रियग्राह्यत्वात् । इदानीमिंद्रियात्मदृष्टिंप्रसक्तांवारयति ॥ तद्दृश्यंद्रष्टृमानसमिति । तल्लोचनंरूपापेक्षयादृगितियदुक्तंतदपिदृश्यमेवनदृक् । यतस्तस्यापिमानसंमनोंतःकरणंसवृत्तिकंद्रष्टृतत्सद्भावसाधकंवर्तते । सतिमनसिव्याप्रियमाणेलोचनस्यसद्भावप्रवृत्त्यादेरवगमादसतिचतस्मिन्सुषुप्त्यादावनवगमादित्यर्थः । तर्हिमनएवप्रत्यगात्मेति प्राप्तां दृष्टिं वारयति । दृश्या धीवृत्तय इत्युत्तरार्द्धेन । प्रागुक्तमंतःकरणंतद्वृत्तयश्च धीवृत्तिशब्देनोच्यंते । ताश्चदृश्यविषयाएव तासांसाक्षीचिदात्मादृक्द्रष्टाप्रकाश

---

१ दूरीकृता । २ दूरीकृता ।

कः । ममम्नोन्यत्रगतामित्यनुभवादन्यत्रमनाअभूवंनादर्श
मित्यादिश्रुतेश्च । सिद्धमनसोपिदृश्यंतराधीनसिद्धिकत्वं
तस्ययोद्रष्टासाक्षीसदृगेव । एवकारव्यावृत्तावाह । नतुदृश्यत
इति । तस्यापिदृश्यत्वेनिरुपपत्तिकानवस्थाप्रसंगात् अंत
तोगत्वास्वतःसिद्धवस्त्वनभ्युपगमे जगदांध्यप्रसंगाच्चस्वप्रका-
शतयापरानपेक्षस्वरूपासिद्धिपर्यंतमेव दृग्दृश्यपरंपरान्वेषणम
तोदृगेवसाक्षीसनान्यदृश्यइत्यर्थः । एतदुक्तंभवति । ये
नविनायस्यद्रष्टृतानसंगच्छतेतदेवैकमग्न्युष्णत्ववत्स्वरूपभूतं-
प्रकाशेनरूपपर्यंतस्यसर्वस्यद्रष्टृनमनश्चक्षुषोः । तयोस्तुसाक्षि
चैतन्यावेशादग्न्यावेशादिवोदकलोहादौ दग्धृत्वंद्रष्टृत्वमुपच
र्यंते । तस्मात्मनआदिविषयपर्यंतंदृश्यमेवेतिनिश्चित्यतेषुस
र्वेषुद्रष्टृत्वेनानुगतंदृश्यविलक्षणं चिदेकरसंप्रत्यंचमात्मानमेष
तेआत्मासर्वांतरइतिश्रुतिप्रकाशितंशुद्धमुद्धरेदिति ॥ १ ॥ संग्रहे
णोक्तंविवृण्वन्यतदृश्यानांपरस्परव्यभिचारात्व्यभिचारिणां

---

१ अनुस्यूतम् ॥

चसर्वाधारदंडमालादिवत्क्वचित्कल्पितत्वनियमाद्द्रष्टृस्वरू-
पस्यसर्वदृश्येष्वन्वयाद्रज्जुखंडवत्तस्याकल्पितत्वव्याप्तेरित्य
न्वयव्यतिरेकालोचनतया द्रष्टुरद्वैतात्मनउपपादनप्रकारमाह।

नीलपीतस्थूलसूक्ष्महस्वदीर्घादिभेदतः ॥
नानाविधानिरूपाणिपश्यल्लोचनमेकधा ॥

आदिपदाद्वक्रवर्तुलत्वादिग्रहणम् । एवंनानाविधा
निपरस्परव्यभिचारीणिरूपाणिपश्यल्लोचनमेकधा नव्यभि
चारीत्यर्थः । नहि लोचनाद्बहिरुक्तरूपसत्त्वे प्रमाणम
स्तिलोचनालोचनदशायामेवतत्प्रतीतेरवान्यदाचतदप्रतीतेः
नचप्रत्यभिज्ञयाप्राक्सत्त्वग्रहस्तस्याअन्यथोपपत्तेः।तथाहि ।
यथाशुक्तौरजतमारोपितंरजतमिदमिहास्तीतिचिरमचिरंवानु
भूय तद्बाधोदयात्प्रागेवाविषयांतराण्यालोच्यपुनः तस्यामेवशु
क्तौलोचनंप्रसारयन्ननिवृत्तचक्षुर्दोषस्तदिदंरजतरूपमितिप्र-
त्यभिजानातिकश्चित्पुमान्नहितत्रप्रत्यभिज्ञाप्रमाणताम्श्नुते।
आरोपितस्यप्रातीतिकशरीरत्वात्।एवमेवाधिष्ठानतत्त्वनामस्व

रूपत्वाद्यधारणपर्यंतंदृष्टविशेषस्यबाधितत्वानवगमात्पूर्वदृष्टसा दृश्यविषयभ्रांत्यंतरोदये प्रत्यभिज्ञाभ्रमइति ॥ नचैवं स तिबौद्धमतापत्तिर्दृश्यदर्शनयोः क्षणिकत्वानंगीकारान्नित्य स्याखंडस्यैकस्यसर्वभ्रमाधिष्ठानस्य सदात्मनश्चिदेकरसस्या भ्युपगमाच्चेतिनकाचनास्मन्मतेदोषकल्पनेत्यत्रयुक्तिरनुसंधे येति ॥ २ ॥

बहुभ्योदृश्येभ्यो द्रष्टृत्वेनोद्धृतस्यैकस्यलोचनस्यापिनांजस द्रष्टृत्वंतस्याप्येकरूपत्वव्यभिचारादित्यतो लोचनमपिदृश्य मेव तस्मात्तदपिस्वद्रष्टुर्मनसोबहिर्नास्तीति व्युत्पादयति—

**आंध्यमांद्यपटुत्वेषु नेत्रधर्मेष्वनेकधा ॥**
**संकल्पयन्मनः श्रोत्रत्वगादौयोज्यता-**
**मिति ॥ ३ ॥**

यथाप्येकस्मिन्पुरुषेएकमेवनेत्रं तथापितन्नैकरूपंतस्यांध्य मांद्याद्यवस्थाभेदेनविकारित्वात्विकारिणश्चस्वविकारद्रष्टृत्वा योगादन्यदृश्यत्वमवश्यमायातंमृत्पिंडादिवत्तस्यापियोद्रष्टाता

---

१ निश्चयपर्यंतं, २ कल्पित०, ३ अंगिकारात्, ४ साक्षात्, ५ लोचनस्य।

दन्वेषणायामंतःकरणंतद्द्रष्टृत्वेनान्वेतीत्याह संकल्पयन्मन इति । आध्यमांद्यपटुत्वेषुनेत्रधर्मेषुसत्सुअंधोहंमंदोहंपटुनेत्रोहमितिचानेकधानेकप्रकारेणसंकल्पयत्सम्यक्कल्पयत्तमनोन्तःकरणं तस्य व्यविचारिनेत्रावस्थास्वव्यभिचारितयाद्रष्टृत्वं सिद्धमिति योजानातिएकत्रानिर्णीतस्यशास्त्रार्थस्यपरत्रापीतिन्यायेनचक्षुष्युक्तंन्यायमितरेंद्रियेषुयोजयेदित्याह । श्रोत्रत्वगादौयोज्यतामितिरूपेषूक्तोन्यायः शब्दस्पर्शादौयोज्यः चक्षुष्युक्तश्चश्रोत्रत्वगादावित्यर्थः ॥ ३ ॥

इदानींचक्षुरादिवन्मनसोप्यन्यदृश्यत्वंसाधयति–

कामःसंकल्पसंदेहौश्रद्धाश्रद्धेधृतीतरे॥
ह्रीर्धीर्भीरित्येवमादीन्भासयत्येकधा
।चितिः॥ ४ ॥

एवमादीनित्यादिपदात्क्रोधलोभमोहादयोगृह्यंतेएवमनेकावस्थमनेकविधमंतःकरणं चितिर्भासयतिपश्यतिसात्वेकधाएकविधैवनतस्याअवस्थांतरंवाधर्मांतरंवासंभाव्यतेतत्रप्रमाणाभावादित्यर्थः ॥ ४ ॥

मनआदिसर्वावस्थासाक्षिभूतायाश्चितेरविकारित्वं साधयं स्तस्याएकरूपत्वंसर्वावभासकतयासर्वत्राव्यभिचारित्वेनाद्वितीयत्वंचोपपादयति--

# नोदेतिनास्तमेत्येषानवृद्धिंयातिनक्षयम्॥ स्वयंतथाविधान्यानिभासयेत्साधनंविना

एषाचितिः सर्वसाक्षिभूततया सर्वानुगतापिनोदेतिन जायतेनास्तमेतिनविनश्यतिअभूतप्रादुर्भावोजन्मसतोऽसत्त्वप्राप्तिर्विनाश इत्येवंविधाद्यंतविकाररहितैषाचितिरित्युक्तं भवति। मध्यमानपि वृद्ध्यादीन्विकारानाद्यंतविकारनिराकरणादर्थतोनिरस्ताअपिप्रतिपत्तिसौकर्यायमुखतः प्रतिषेधयति न वृद्धिमित्यादिना। वृद्धिरुपचयः क्षयोऽपचयः सावयवंहिकुड्यादिअवयवोपचयाद्वर्द्धतेअपचयाच्चापक्षीयते चितेस्तु निरवयवत्वान्नतयोगइत्यर्थः। विपरिणामस्य चावस्थांतराप्तिरूपस्योक्तलक्षणवृद्धिक्षयाभावात्तन्निरसनेनैव निरासासिद्धिः। अस्तितालक्षणस्य च वि-

कारस्यकदाचित्कालावस्थितिरूपस्य , जन्मविनाशासंभवा देवासंभवउक्तो वेदितव्यः । कुतएवमस्याः षड्भावविका रराहित्यमित्यत्रहेतुमाह । स्वयमिति । तथाविधानिउक्तवि कारवंति तानि चान्यानिचेति तथा भासयेत्प्रकाशयेत् । किंभासनं भानोत्पादनं हंत तर्हिं विकारित्वमवस्थांतरयोगा दित्यत आह । साधनं विनेत्यर्थः । तथाचाविकारितया सर्वविकारावस्थासाक्षित्वादस्याश्चितेर्नविकारयोगशंकेतिता त्पर्यार्थः ॥ ५ ॥

ननु तदेवंद्रष्टृदृश्यान्वयव्यतिरेकालोचनेनव्यभिचारि- भ्यो दृश्येभ्योमिथ्याभूतेभ्योऽव्यभिचारिद्रष्टासत्यआत्माअ- द्वितीयःसिद्धः। स च निर्विकारएवसः सर्वावभासकइत्युक्तं तन्नोपपद्यतेअवस्थात्रयवत्तयात्मनोनुभवादित्याशंक्यमैवं अ- वस्थात्रययोगितयावभासस्यसाभासबुद्ध्यध्यासनिबंधनत्वा- दध्यस्तस्यचमिथ्यात्वादित्यभिप्रेत्यसाक्षिसाक्ष्यान्वयव्यतिरे- काभ्यामसंगकूटस्थात्मतामात्मनः प्रतिपादयति। चिच्छाया- वेशतइत्यादिभिःसप्तश्लोकैः ।

चिच्छायावेशतोबुद्धौभानंधीस्तु द्विधा स्थिता॥एकाहंकृतिरन्या स्यादंतःकरणरूपिणी ॥ ६ ॥

चिन्निर्विकल्पकंसर्वावभासकंज्ञानंप्रत्यगात्मस्वरूपंतस्यच्छाया आभासस्तस्यबुद्धावंतःकरणे आवेशःप्रवेशस्तस्मादावेशतोभानंविशेषतोभासनमात्मनोभवतीति शेषः । एतदुक्तं भवति। चिदात्मास्वरूपप्रकाशतयास्वयंसदाभासमानोपिस्वतोनिर्विशेषत्वाद्विशेषतो नावभासते। तस्मिन्पुनरध्यस्तमनाद्यनिर्वचनीयमज्ञानं यदाकर्मोद्भूतंवासनाविशेषं सदंतःकरणाकारं जायतेतदातस्मिन्नवभासकतयानुगतश्चिदात्मा तप्तायःपिंडवदेवाग्निरयः पिंडाकृतिर्बुद्ध्याकारावभासते ॥ तत्रबुद्ध्याविशेषेणगृह्यमाणमात्मचैतन्यमाभासच्छायेति चोच्यते । तदाबुद्ध्यात्मनोरेकत्वावभासात्तेन विशेषेणसविशेषमात्माभाति । एतदुच्यते । चिच्छायावेशतो भानमिति । यस्यां बुद्धावेवंभानमात्मनः साधीस्तु बुद्धिस्तु

१ अंतःकरणे,

द्विधा द्विप्रकारेण स्थिता एकाहंकृतिरूपेण अहंकृतिरस्या एकविधेत्यर्थः । अन्या विधा अंतःकरणरूपिणी स्यान्म नोरूपिणी भवतीत्यर्थः । मनःसंकल्पविकल्पात्मकंवासना स्थानं चिदात्मनिकर्तृकरणभावमापन्नासतीबुद्धिर्विशेषव्य वहारप्रवर्तिकाभवतीत्यर्थः ॥ ६ ॥

तत्रचिज्जडयोर्बुद्ध्यात्मनोस्तादात्म्याध्यासमुक्तं दृष्टांतेन स्पष्टयति–

छायाहंकारयोरैक्यंतप्तायःपिंडवन्मतम् ॥
तदहंकारतादात्म्याद्देहश्चेतनतामियात् ७

पूर्वार्द्धमुक्तार्थम्। अयसोग्निव्याप्तत्वेनाग्नित्वापत्तिवदहंकार स्यात्मचैतन्यव्याप्तत्वेनास्मदर्थत्वंमतमित्यभिप्रायः । एता वतालिंगशरीराध्यासआत्मनिकर्तृत्वभोक्तृत्वव्यवहारप्रवृत्ति हेतुर्दर्शितः । इदानीमुक्तोपाधिं पुरस्कृत्यस्थूलशरीराध्या समात्मनोदर्शयति तदहंकारेत्युत्तरार्द्धेन । देहोप्यस्मदर्थत्वोल्ले खयोग्यः संवृत्तइत्यर्थः ॥ ७ ॥

इदानीमुक्ताहंकारतादात्म्यं विषयभेदेनविभज्यव्युत्पादयति-

अहंकारस्यतादात्म्यंचिच्छायादेहसाक्षि-भिः ॥ सहजंकर्मजंभ्रांतिजन्यंचत्रिविधं-क्रमात् ॥ ८ ॥

अहंकारस्यचिच्छाययाचिदाभासेनयत्तादात्म्यंतत्सहजं उत्पत्तिविशिष्टं चिच्छायाग्रस्ततयैवाहंकारस्योत्पत्तेरित्यर्थः। देहेनसहाहंकारस्यतादात्म्यंकर्मजं प्राचीनधर्माधर्मजन्यंदेह योगस्यतदधीनत्वादित्यर्थः । साक्षिणातुतादात्म्यंभ्रांति जन्यंभ्रममात्रसिद्धमितिक्रमादहंकारस्यतादात्म्यंत्रिविधंभव-तीत्यर्थः तथाचानुभवोहंजानामिअहंमनुष्यअहमस्मिभवा-मीतिचक्रमेणानुसंधेयः ॥ ८ ॥

इदानीमुक्ताहंकारतादात्म्यावभासानांक्रमेणनिवृत्तिहेतून्व्यु त्पादयति—

संबंधिनोःसतोर्नास्तिनिवृत्तिःसहजस्यतु॥ कर्मक्षयात्प्रबोधाच्चनिवर्तेतक्रमादुभे ॥९॥

संबंधिनोरहंकारचिच्छाययोः सतोर्विद्यमानदशायांतयो स्तादात्म्यनिवृत्तिर्नास्त्येवतुशब्दोऽवधारणार्थः । अहंका-

रोदयात्सिद्धस्याभासस्याहंकारानिवृत्त्यैव निवृत्तेः यथाश रावोदकनिमित्तोदयस्य सवितृप्रतिबिंबस्यशरावोदकनिवृ- त्त्या निवृत्तिस्तद्वदित्यर्थः । देहाहंकारतादात्म्यंकर्मक्षयाद्दे- हारंभकस्यकर्मणः क्षयाद्देहपातान्निवर्ततेसाक्ष्यतादात्म्यंयुग पदेवानिवर्त्ततइति ॥ ९ ॥

एवमात्माहंकाराध्यासभेदांस्तन्निवृत्तिहेतूंश्चव्युत्पाद्याधुना- हंकाराध्यासकृतएवात्मन्यवस्थात्रयावभासः संसारित्वंचेति व्युत्पादयितुमुपक्रमते अहंकारलयइत्यादिभिस्त्रिभिः—

अहंकारलयेसुप्तौभवेद्देहोप्यचेतनः॥ अहं कृतिविकारोत्थःस्वप्नःसर्वस्तुजागरः १०॥

सुप्तौसुषुप्त्यवस्थायामहंकारलयेहंकारेकारणैक्तांप्राप्तेस्र तिदेहोपिस्थूलोचेतनः चेतनावियुक्तोभवेत्अपिशब्दोबाह्य घटादिदृष्टांतार्थः यथासदैवघटादयोऽचेतनाएवतथादेहोप्य चेतनएवसदाचैतन्यव्यभिचारित्वात् । चिच्छायाग्रस्ता हंकारव्याप्तिकृतंदेहेचैतन्यं तद्वियोगे वियुज्यते ॥ तदा

सुषुप्तः पुरुषोभवतीत्यर्थः । अहंकारलयोपाधिकमात्मनिसु षुप्त्यवस्थायोगमुक्त्वाहंकारस्थित्याधिकमेवात्मनोऽवस्थांतर- मपि न स्वत इत्याहाहंकृतिविकारोत्थ इति ॥ १० ॥

कथं सर्वःस्वप्नोजागरश्चसर्वोहंकारविकारोत्थइत्यपेक्षाया माह—

अंतःकरणवृत्तिस्तुचितिच्छायैक्यमागता ।
वासनाःकल्पयत्येवबोधेऽक्षैर्विषयान्बहि ११

चितिच्छायैक्यमागतांतःकरणवृत्तिरेषास्वप्नेवासनाःकल्प यति संचिनोति।यतएवैषाबोधेप्रबोधेऽक्षैरिंद्रियैर्बहिर्विषयान्क ल्पयतीतियोजना । एतदुक्तंभवति।बाह्यार्थविषयानुभवज निताःसंस्काराःस्वप्नहेतवइतिस्थितिस्तत्रबाह्यार्थानुभवआ- गंतुकःप्रतिविषयंनात्मनोधर्मस्तस्यकूटस्थत्वात् नापिदेहेंद्रि- यमनसामुअचेतनत्वनिश्चयात्तेषामचेतनत्वंचाक्रियावत्त्वात् किंतुदेहेंद्रियमनआत्मनांमिथःसंबधेसातिजायतेसजायमानो- विषयानुभवःकस्यधर्मइतिनज्ञायते । नचवाच्यंमिलितेष्वे-

वप्रदर्शनादेषामेवायंधर्मइतिसंघातचेतनावादस्यशास्त्रकृद्भिर्नि रस्तत्वात् नतु देहस्य रूपादिमत्त्वेन घटादिवदचेतनत्वनि श्चयादिंद्रियाणांचभौतिकविषयकत्वेनभौतिकत्वावगमात्कर णत्वेनकुठारादिवच्चैतन्याविषयित्वनिरासोपपत्तेर्मनसश्चधर्मि ग्राहकप्रमाणेनकरणत्वसिद्धौतस्यापींद्रियवदचेतनत्वनिश्च- यात्परिशेषादात्मनएवधर्मोविषयानुभवइति चेद् मैवं तस्यनि- हंकृत्वश्रुतिविरोधेनपरिशेषाऽसिद्धेः अर्थप्रकाशोबुद्धिरिति प्रकाशगुणत्वाभिमतस्यज्ञानस्यप्रदीपप्रकाशवत् स्वाश्रयद्रव्य जन्मातिरेकेणाजन्मानुपपत्तिरिति युक्तिविरोधाच्चपरिशेषा ऽसिद्धेः । तस्माद्विषयानुभवोविभ्रमएवसचसत्यानृतेमिथुनी भावलक्षणं सत्यं चचिदात्मातत्सत्यंसआत्मेतिश्रुतेः अनृतं तुमनआदिविकारगणोवाचारंभणंविकारोनामधेयमितिश्रुतेः तथाचचिदात्मन्यध्यासनिष्पन्नाहंकारस्यचैतन्यच्छायाव्या प्ततया साभासस्यविषयपर्यंतंजलूकावद्दीर्घीभावलक्षणाया- वृत्तिःसाविषयानुभवइत्यागतं तादृश्याश्चवृत्तेराश्रयोहंकाराभेदे नावभासमानश्चिदात्माप्रमातृत्वमनुभवन्जागरणाद्यवस्थावा

निवभवतिएवमहंकारविकाररूपोविषयानुभवः स्वाश्रयेसाभा साहंकारएववासनारूपेणविलीयते एवंसर्वजाग्रद्वासनाश्रयमं तःकरणंन्चित्तादिदोषोत्पन्नमदृष्टादिना समुद्बुद्धवासनासुख यमेवग्राह्यग्राहकरूपेणविवर्त्तमानं भवति यदातदातदधिष्ठा नतयातदनुगतश्चिदात्मास्वमावस्थावानिवभवति । अतोहं कारोपाधिनिबंधनमात्मनोवस्थात्रयंनस्वतइतिशुद्धएवात्मास देतिसर्वंसुस्थमिति ॥ ११ ॥

उपसंहरति—

मनोहंकृत्युपादानंलिंगमेकंजडात्मकम् ॥
अवस्थात्रयमन्वेतिजायतेम्रियतेऽपिवा ॥

मनोहंकृतिभ्यामुपादीयतेइतिमनोहंकृत्युपादानंमनसावास- नाश्रयेणास्मीतिसंकल्पाहंकारेण चिदात्मभावमापन्नेनाभि मन्यमानंलिंगं तच्चसमष्टिर्हिरण्यगर्भात्मनाएकमाविद्यकंभू तसूक्ष्मविकारत्वात्जडात्मकं भौतिकमेव तच्चाहंकारिक मित्यर्थः। एवंविधं यत् लिंगं लिंगशरीरं तदवस्थात्रयमन्वे तिअनुवर्त्तते इति । जाग्रत्स्वप्नयोःकथमनुवर्ततेतदाह।जाग्र

तेऽम्रियतेऽपि वाऽउद्भवाभिभवरूपेणान्वेति । यतो जायतेऽम्रियते च सुप्तावित्यर्थः । वाशब्दाच्चतुर्थींवाकदाचित्मूर्च्छाख्यावस्थामन्वेतीत्यर्थः ॥ १२ ॥

तदेवंत्वंपदार्थःसर्वावस्थासाक्षित्वादवस्थातदाश्रयसंघात-विलक्षणोऽविकारीकूटस्थोनित्यःप्रत्यगात्मेति निर्द्धारितः । इदानीं तत्पदार्थंशोधयितुमुपक्रमते—

शक्तिद्वयंहिमायायाविक्षेपावृतिरूपकम् ॥
विक्षेपशक्तिर्लिंगादिब्रह्मांडांतंजगत्सृजेत् ।

अयमर्थः अस्ति तावत्प्रत्यभिज्ञादिप्रमाणसिद्धंभूतभौतिकंजगन्नामकार्यंतच्चकारणमंतरेणनसंभवतिकारणं चोपादानं निमित्तंचेतिद्विविधंतदुभयंश्रुतितोयुक्तितश्चविचार्यमाणंनपरमार्थं किंतु मायामयं यतो मायां तुप्रकृतिंविद्यान्मायिनंतु महेश्वरमितिपरमेश्वराधिष्ठितांमायांप्रकृतिशब्देननिर्दिशंती श्रुतिर्जगदुपादानंमायाऽपरपर्यायमनाद्यज्ञानमाह। तत्रैवोपक्रमेकिंकारणंब्रह्मेतिब्रह्मणोजगत्कारणत्वं किमुपादायेति विमृश्यकालस्वभावादिकारणतांमध्येप्रक्षिप्यतदासात्वमात्मा

त्यनीशः सुखदुःखहेतोरित्यंतेनावधार्यंते ध्यानयोगानुग
ताअपश्यन्देवात्मशक्तिंस्वगुणैर्निगूढामित्यात्मशक्तिजाभास-
मायामेवजगत्कारणंनिर्धारयातिअचेतनस्यकार्यकरणंचवि
द्यतेपरास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचे-
तितामेवमायामीश्वरशक्तिं ब्रह्मणः सर्वकारकत्वनिर्वोढ्रीं
द्रढयति । तथातद्धेदतर्ह्यव्याकृतमासीत्तमआसीत्तमसा
गूढमग्रेऽप्रकेतमसद्वाइदमग्रआसीत्ततो वैसदजायतेत्येवमन्ये
पि श्रुतिवादाः मयाध्यक्षेणप्रकृतिः सूयतेसचराचरमि-
त्यादिस्मृतिवादाश्चात्रानुसन्धेयाः युक्तितोपिमायामयमे
वजगत् । यतः संघातारंभपरिणामपक्षानयुक्तिसहाः
तथाहिसंघातवादिभिः सर्वभावानांक्षणिकत्वांगीकारात् ॥
क्षणिकानांचसहकारिसापेक्षतयातन्निरपेक्षतयावाकारणत्वा
नुपपत्तेः सहकारिप्रतीक्षयाभावास्थितौक्षणिकत्वाभ्युपग-
महानात् ॥ तदनपेक्ष्यजनकतायांसदाकार्योत्पादनप्रस-
गात् नचपूर्वक्षणस्योपादानतयाकारणं तदनन्वितत्वाद-
न्वये वाक्षणिकत्वक्षतेः नापिनिमित्ततया क्षणिकयोरुपका

योंपकारकभावानिरूपणात् तस्मान्नसंघातवादोयुक्तिसहः॥ तथारंभवादोपिअण्वोर्न्निरवयवत्वस्वीकारान्निरवयवयोश्चसं-योगायोगात्संयोगेयोगेवोपचयाभावादनुपचितस्योपादानका रणत्वायोगादश्लिष्टएवपरिणामवादोपिनयुक्तिसहः ॥ भव स्यपूर्वरूपास्थिते नष्टेनारूपांतरोदयासंभवाद्गुणत्रयात्मकस्य प्रधानस्यसाम्यावस्थायांस्थितायांनमहदाकारताविरोधात्॥ तस्यांचनष्टायांप्रधानरूपकारणनाशान्निराश्रयो महान्कथ-मुद्भवेत् । तदपि गुणत्रयस्य सत्त्वान्नोक्तदोषप्रसंग इति चेत् ॥ तत्रेदं वक्तव्यं तदाकिंगुणाअविकृताव-र्तंतेविकृतावेति । आद्येनतेमहतउपादानंभवेयुः स्वरूपाव-स्थाप्रच्युत्यभावात् द्वितीयेगुणावस्थानाशेनिरुपादान-स्यमहतोनोत्पादः एवमत्रोत्तरोत्तरंपूर्वपूर्वस्यनाशोस्थितौवा नोत्पत्तुमर्हंतीति महतोहंकारोहंकारात्पंचतन्मात्राणि तेभ्यः पंचमहाभूतानीत्यादिप्रक्रियानचातुरींधत्तइति । किंचनका रणमविकृत्यकार्यस्योत्पादोदृष्टो विक्रियमाणंवानित्यमेवेति शून्यावशेषंजगदापद्येतेत्यास्तांविस्तारः । तथासृज्यप-

पिविचार्यमाणंनसत्तस्यसिद्धस्यानिष्पादाविरोधात् । नाप्यस त्तस्यनिष्पादासंभावात् । नहि लोहकारस्यकूटः समुत्पा द्यतेत्यंतासद्वाखपुष्पमितिपारिशेषान्मायात्मकंकारणंमायामयं चकार्यमिति तदेतदाह शक्तिद्वयं हीति मायायाः साभा सायाः शक्तिद्वयंहिप्रसिद्धंसर्वजनेषु । किं तत् । विक्षेपरू पैकाशक्तिरावृतिरपरानाहंब्रह्ममनुष्योहमितिसर्वेषामनुभवइ त्यर्थः । तत्र विक्षेपशक्तिद्वारकं मायाकार्यमाहविक्षेपे तिलिंगसूक्ष्मशरीरंसप्तदशात्मकंतदादौप्रथमंयस्यब्रह्मांडस्थू- लशरीरंसमष्टिरूपमंतेयस्यतांल्लिंगादिब्रह्मांडांतंचगत्सृजेद्विक्षे- पशक्तिस्तत्प्रधानमज्ञानमित्यर्थः । तदुक्तमभियुक्तैः आ- क्कार्याविक्षिपति (?) संस्फुरदात्मरूपंजीवेश्वरत्वजगदा कृतिभिर्मृषैव । अज्ञानमावरणविभ्रमशक्तियोगादात्मत्वमा त्रविषयाश्रयताबलेनेति ॥ १३ ॥

यतोमायामयेसृष्टेरतो रज्जुवदधिष्ठानतया विवर्तमानं माया सत्तास्फूर्तिप्रदत्वेनानुगतमात्रेणकूटस्थमपि ब्रह्मकारणमित्यु च्यतेनपरमार्थतइत्येतदाह—

सृष्टिर्नामब्रह्मरूपेसच्चिदानंदवस्तुनि ।
अंबुफेनादिवत्सर्वनामरूपप्रसारणम् १४॥

ब्रह्मरूपे अव्यावृत्तेऽनुगतेपूर्णचित्स्वरूपेसृष्टिर्नामरूपप्रसारणमित्यन्वयः नामवाचकः शब्दो रूपंवाच्याकारःवाच्यवाचकाकारस्यप्रसारणंप्रकटीकरणंपूर्वपूर्वभ्रांतिवासनयातथोल्लेख इत्यर्थः । तदेतज्जगदधिष्ठानभूतब्रह्मान्यत्वानन्यत्वाभ्यामनिर्वचनीयमेवनपरमार्थमित्यत्रदृष्टांतमाह अंबुफेनादिवत्सर्वमिति । सर्वमेतदंबुनिफेनादिवद्द्रष्टव्यंनह्यंबुनिदृश्यमानफेनाद्यंबुनोभिन्नंतेनविनानिरूप्यमाणस्यस्वरूपस्याभावात् पार्थिवाग्न्युपशामकत्वाच्च । नाप्यभिन्नमंबुनः पृथगुपलंभाद्द्रव्यात्मकत्वाच्च । नापिभिन्नाभिन्नंविरोधात् । एवंजगदपिनचिदात्मनोभिन्नंचिद्रूपाद्बहिःस्वातंत्र्येणानिरूपणात् । नाप्यभिन्नंपृथगुपलंभादेवामिंद्रियगोचरत्वाज्जडत्वात्स्थलत्वादनेकप्रकारत्वाच्चेति । सच्चिदानंदवस्तुनीति ब्रह्मणोविशेषणंतस्यस्वरूपनिर्देशपरंसदिति सदैकरूपत्वमागमापायिप्रपंचवैलक्षण्यमुच्यते ॥ चिदिति सनातनाप्लुतप्रका

शात्मकत्वोक्त्याजडप्रपंचवैलक्षण्यमीर्यते आनंदमिति ॥ परमानंदरूपत्वकथनेनपरमपुरुषार्थरूपत्वद्योतनात्तुच्छदुः- खाकारप्रपंचविलक्षणतोक्तावस्तुशब्दोबाधाभावं लक्षयति । तेनदृष्टनष्टस्वरूपतयास्वप्नतुल्यजगद्वैलक्षण्यमुक्तंतथाचकार्य- कारणरूपेणवाच्यवाचकरूपेणोपकार्योपकारकरूपेणविभा- व्यमानप्रपंचविलक्षणस्यब्रह्मणः सृष्टत्वादिमायामयमेवे त्यर्थः ॥ १४ ॥

एवंमायाविक्षेपशक्तिनिबंधनं प्रपंचविभ्रममुपपाद्यावरणश क्तिप्रयुक्तंब्रह्मस्वरूपाविवेकलक्षणं संसारित्वमात्मनोदर्शयति

अंतर्दृग्दृश्ययोर्भेदंबहिश्चब्रह्मसर्गयोः॥या वृणोत्यपराशक्तिसासंसारस्यकारणम्॥१५

अंतःप्रतीचि अहमित्यस्मिन्नवभासे याशक्तिर्दृश आत्मनोदृश्याद्भेदं वैलक्षण्यं दृश्यस्यवादृग्विलक्षणत्वमावृ णोतितथाबहिश्चपरांचिविषयेब्रह्मणः परिपूर्णस्यसृज्यत इतिसर्गप्रपंचस्य मिथोभेदं विलक्षणस्वभावं सत्यज्ञानानं

दैकरसस्यसमात्मत्वंतद्विपरीतरूपत्वं वावृणोति सापराधि-
क्षेपरूपायाअन्यासंसारस्यप्रसिद्धस्यकारणस्वरूपास्फुरणा-
द्विपरीतरूपतामात्मनो मन्यमानः स्वमइव संसरतिलोक
ति प्रसिद्धत्वान्नात्रयुक्तानुसंधानेनकार्यमित्याभिप्रायः ।१५
सासंसारस्यकारणामित्युक्तंतत्रतयाशक्त्याकः संसरतीत्यपे-
क्षायांसंसारिस्वरूपंविविच्यदर्शयन्संसारस्यमायामयत्वमाह-

साक्षिणःपुरतोभातिलिंगदेहेनसंयुतः॥चि-
तिच्छायासमावेशाज्जीवःस्याद्व्यावहारिकः

साक्षिणः सर्वांतरस्य प्रत्यगात्मनः पुरतोऽग्रेऽव्य-
वधानेनयल्लिंगमहंकारप्रधानं प्राणांतःकरणलक्षणं देहेनस्थू-
लेनसंयुतंभातितल्लिंगं चितिच्छायासमावेशाच्चैतन्याभा-
व्याप्तत्वाद्व्यावहारिकोऽव्यवहारसिद्धोजीवः स्यात्कर्ताभो-
क्ताहंमनुष्यःकाणोबधिरइत्येवंव्यवहर्ताभवतीत्यर्थः॥ १६ ॥
दृश्यस्यदृगात्मन्यध्यासनिबंधनं जीवत्वंव्यवहाराश्रयमुक्त्वा

बंधमोक्षयोर्वैयधिकरण्यशंकानिवृत्तये चिदात्मनोऽनात्मन्य-ध्यासनिबंधनंजीवत्वमाह—

**अस्यजीवत्वमारोपात्साक्षिण्यपिचभासते**
**आवृतौतुविनष्टायांभेदजातंप्रयातितत् ॥**

अस्य पूर्वोक्तलिंगस्य जीवत्वमारोपादध्यासात्। साक्षिण्यपिप्रत्यक्चिदात्यन्यपिचभासतेतथाच संघातवि लक्षणः साक्ष्यपिसंघाततादात्म्याध्यासात्संसार्येव भासेत नपरमार्थतः कोपि संसारी जीवोऽस्तीत्यभिप्रायः। आत्मा ज्ञाननिबंधनमात्मनोबंधनमित्यत्रान्वयमुक्त्वाव्यतिरेकमा ह। आवृताविति। आत्मतत्त्वावृतौअज्ञानरूपायांविनष्टा यांतुतद्भेदजातंपूर्वोक्तलिंगंजीवः साक्षीत्येवंलक्षणविशेषजातं प्रयातिप्रकर्षेणगच्छतिबाधितंभवतीत्यर्थः ॥ १७ ॥

तदेवमन्वयव्यतिरेकाभ्यामावरणशक्तिप्रधानाज्ञाननि बंधनमात्मनः संसारित्वमुक्त्वाविक्षेपशक्तिप्रधानाज्ञानिनि बंधनमेवब्रह्मणः सप्रपंचत्वमित्येतत्प्रपंचयति—

सर्गस्यब्रह्मणस्तद्वद्भेदमावृ-
त्यतिष्ठति ॥ याशक्तिस्तद्वशा
ब्रह्मविकृतत्वेनभासते ॥ १८ ॥

यथादृश्यस्यप्रत्यग्दृश्येविवेकाच्छादिका आवरणशक्तिस्तद्वद्याशक्तिः विक्षेपात्मिकाब्रह्मणः परमात्मनः सकाशात्सर्गस्यसृज्यप्रपंचस्यभेदंब्रह्मासंसर्गित्वलक्षणं विशेषमावृत्यतिष्ठतितद्वशात्तन्महिम्नाब्रह्मविकृतत्वेन सप्रपंचत्वेनभासते ॥ जगत्सृष्टिस्थितिप्रलयकारणंब्रह्म सर्वकर्मासर्वकामइत्यादौसप्रपंचमिवप्रतीयतइत्यर्थः ॥ १८ ॥ अन्वयमुक्त्वाव्यतिरेकमाह—

अत्राप्यावृतिनाशेनविभाति
ब्रह्मसर्गयोः ॥ भेदस्ततोविकारः
स्यात्सर्गेनब्रह्मणिक्वचित् ॥ १९ ॥

अत्रापि ब्रह्मण्यावृतिनाशे आवरणरूपाविद्याविनाशे सतिब्रह्मसर्गयोः ब्रह्मप्रपंचयोर्भेदोविशेषोनविभाति इदं

ब्रह्मकारणमिदंजगत्कार्यमितियोविशेषः स्थितः सोविद्यावि
क्षेपरूपत्वादविद्यायांनिवृत्तायांनिवृत्तः पुनर्नभासतेइत्य
र्थः । यतएवमविद्यामायादिशब्दवाच्या ज्ञानकल्पितोवि
कारोऽतः कारणात्सर्गेसर्गनिमित्ते क्वचित्कदाचिदपिब्रह्मणि
नाविकारःस्यान्नभवतीत्यर्थः ॥ १९ ॥

एतावताग्रंथसंदर्भेणसदैवासंगकूटस्थएवात्मासाक्षीत्वंपदा
र्थः। तथासदैवानिष्प्रपंचकूटस्थमेवब्रह्मतत्पदार्थः।उभयत्रभा-
समानोविशेषगुणोमायामयत्वात्कालत्रयेपिनपरमार्थ इति
नतत्कृतोविशेषः । क्वोप्यात्मवस्तुनिसंभाव्यतेइतिशोधितौ
तत्त्वंपदार्थौ । इदानींतयोरेकत्ववाक्यार्थंकथयितुंतत्त्वंपदयो-
र्वाच्यार्थलक्ष्यार्थंचक्रमेणश्लोकद्वयेनोपदिशति—

अस्तिभातिप्रियंरूपंनामचेत्यं
शपंचकम् ॥ आद्यंत्रयंब्रह्मरूपं
जगद्रूपंततोद्वयम् ॥ २० ॥

यथाबाह्येकस्मिन्देहे तद्वद्बाह्येघटेच अस्तीतिसत्तोल्लिख्य
ते भातीतिस्फुरता प्रियमित्यनुकूलवेदनीयतयासुखात्मता

तथारूपमाकारविशेषः करचरणादिव्यूहलक्षणंपृथुबुध्नोदरा-
कारलक्षणंच नामशरीरंघटइतिचेत्येवंपंचकंयदस्तितत्राद्यंत्र-
सत्तास्फुरताभातिचेतिब्रह्मरूपंप्रत्यग्ब्रह्मणः स्वरूपंपरमार्थं
ततःपुरस्ताद्यदुक्तंद्वयंनामरूपंचेतितज्जगद्रूपंमायामयमनृतंवा-
चारंभणत्वश्रवणादित्यर्थः । एतेनसर्वएवबाह्याभ्यंतराभा-
वाव्याख्याताः । तथाचैतन्यंचैकमविविक्तंसत्तत्त्वंपदयोर्वा-
च्यंभवतीतिसिद्धम् ॥ २० ॥

इदानींपदयोर्लक्ष्यार्थंवाच्यार्थैकदेशमुद्धृत्योपदिशति—

खवाय्वग्निजलोर्वीषु देवतिर्य
ङ्नरादिषु ॥ अभिन्नात्सच्चिदा
नंदाद्भिद्यतेरूपनामनी ॥ २१ ॥

खादिषुपंचसुअधिभूतेषुदेवतिर्यगादिभेदभिन्नेष्वध्यात्मेषु
चअभिन्नादव्यावृतात्सच्चिदानंदादधिष्ठानरूपात्साक्षिणः रू-
पनामनीप्रतिविषयंभिद्येतेतथाचसर्वपदार्थेष्वनुस्यूतं सच्चिदा-
नंदात्मकंवस्तुतत्त्वंपदयोर्लक्ष्यमित्यर्थः । ननुकथंजगतिवि-
भाव्यमानानांसत्तास्फूर्तानन्दानां प्रत्यग्ब्रह्मरूपत्वमिदमिति

राङ्रूपेणेवप्रतीयमानत्वादितिचेत् । उच्यते । विचार्यमा
णेषुविषयेषुसत्त्वादेरसंभवएव । तथाहिसादिदमितिपराङ्रूप
मुल्लिख्यते तन्नास्तीदमिति यद्गृह्यतेतदेवसमयांतरेऽसद्बुद्धि
गम्यंदृश्यतेनास्तीदमिहेति तथाचास्तित्वनास्तित्वयोरेकत्र
विरोधान्नसत्त्वमसत्त्वंवा विषयस्यनिश्चेतुं शक्यते कालभेदे-
नोभयधर्मोपपत्तेर्नदोष इति चेत्तर्हि शुक्तिरजतस्यापिसत्त्वा
सत्त्वेपरमार्थेस्यातामितिनभ्रांतिबाधव्यवहारः क्वापीतिप्रस
ज्जेत। तस्माद्विशेषेषुव्यभिचरत्सुयादिदमितिसर्वाव्यभिचार
तयासर्वत्रावभासते । तदेवैकंसत्तस्यनक्वापिनकदापिव्यभि
चारइतितत्सत्यम् । विषयास्तुव्यभिचरंतोमिथ्येतिसिद्धम्।
तत्सत्यंतद्ब्रह्मतत्परंसआत्मेतिश्रुतेः। तस्यदेमितिपराङ्रूपेणो
ल्लेखस्तुपरागध्यस्तविषयो परागनिबंधनो विभ्रमोहंकारादि
देहांतेष्वहमिति प्रत्ययोपिप्रत्यक्त्वाध्यासापेक्ष्यइति सर्वम
नवद्यम्। एवंघटःस्फुरतिपटः स्फुरतिघटइष्टः पटइष्टः इत्यत्रा
पिघटपटादीनांमिथोव्यभिचारेपिस्फुरत्वस्येष्टस्य च स्वतो
विशेषानिरूपणद्व्यभिचरत्सुविशेषेष्वव्यभिचरतः स्फु-

रत्वेष्टत्वयोः सर्वानुस्यूतसन्मात्रस्वभावाव्यभिचारा
त्काब्रह्मात्मरूपता । अतएवश्रुतिः ज्ञानंब्रह्मआनंदोब्रह्मविज्ञ
नमानंदंब्रह्मेति । एतेनानंदमपिब्रह्मणोदेशकालवस्तुपरिच्छे
दराहित्यमुक्तमेवभवति देशकालयोरपिजडत्वेनपरागवस्
वद्व्यस्तत्वेनमिथ्यात्वादिति । तस्मान्नामरूपयोर्व्यभि
चारिणोर्व्युदासेनसत्तास्फुरणानंदभागौब्रह्मात्मपदाभ्यां ल
क्षयित्वाहं ब्रह्मास्मीतिवाक्यार्थोनुसंधेयः।तत्रापिसत्तारूपेण
परागर्थव्यावृत्तं ब्रह्मतत्पदेनलक्षणीयंस्फुरणपरप्रेमास्पदत्वे
न देहाद्यहंकारप्रत्यगर्थव्यावृत्तम् आत्मात्वंपदार्थोलक्षणीयः
अनयोश्च लक्षणयापदात्स्फुरणदशायांव्यावर्त्यभेदाद्भे
भासमानेपि नस्वरूपभेदोस्तिस्फुरणत्वराहित्यत्वेसत्तायः
जडत्वापत्तेः । सत्ताव्यावृत्तस्यचस्फुरणस्यासत्त्वप्रसंगात्स
त्तास्फुरताविरहिणश्चानंदस्यादर्शनादसंभवाच्चेत्येवमखंड
वाक्यार्थप्रतिपत्तिसिद्धिरिति ॥ २१ ॥

एवंविज्ञातवाक्यार्थस्य दृढतरवाक्यार्थरूपाखंडब्रह्मा
त्मसाक्षात्कारोदयेसाधनविशेषमुपदिशति—

उपेक्ष्यनामरूपेद्वेसच्चिदानं
दवस्तुनि ॥ समाधिंसर्वदाकु
र्याद्धृदयेवाथवाबहिः॥२२॥

सपूर्वोक्तप्रकारेण वाच्यांशभूते नामरूपे द्वेअप्युपेक्षा वस्तु तयाबाधित्वासच्चिदानंदवस्तुनिलक्ष्ये खंडार्थेएकरसेसर्वदा समाधिं कुर्यात्समाधिर्नामचित्तस्याखण्डात्माद्वयब्रह्मताव न्मात्रेणास्थिरीभावःतंकुर्यादित्यर्थः । कुत्रस्थानेसमाधिःक र्त्तव्यइत्यपेक्षायांकर्तुर्बुद्धिसामर्थ्यतारतम्येन स्थानभेदमा ह हृदयेवाथवाबहिरिति ॥ २२ ॥

तत्रांतर्बहिश्चब्रह्मणिकर्त्तव्यसमाधिं द्वेधाविभज्यव्युत्पाद यतिसप्तभिःश्लोकैः। तत्रचतुर्भिर्हृदयालंबनसमाधिभेदानाह-

सविकल्पोऽविकल्पश्चसमा
धिर्द्विविधो हृदि ॥ दृश्यशब्दा
नुवेधेनसविकल्पःपुनर्द्विधा ॥२३॥

ज्ञातृज्ञानज्ञेयविकल्पानां सम्यग्विलयानपक्षतयाऽख ण्डसच्चिदानंदात्मनिचित्तसमाधानं सविकल्पकसमाधिः ।

उक्तविकल्पानांसम्यग्लयापेक्षयायथोक्तात्मनिचित्तसमाधानं सविकल्पोनिर्विकल्पकसमाधिरिति । हृदिद्विविधसमाधिरित्यर्थः । प्रथमंपुनर्द्वेधाविभज्यतेदृश्येति ॥ दृश्यानुवेधेनप्रकारेणशब्दानुवेधेनचप्रकारेणसविकल्पकः समाधिः पुनर्द्विधेत्यर्थः ॥ २३ ॥

तत्राद्यं व्युत्पादयति—

कामाद्याश्चित्तसाहृश्यात्तत्साक्षि
त्वेनचेतनाम् ॥ ध्यायेद्दृश्यानुविद्धो
यंसमाधिःसविकल्पकः ॥ २४ ॥

कामाद्याश्चित्तस्यैववृत्तयः दृश्याश्चित्तवदाविर्भावतिरोभावधर्मकत्वात्साचित्तावस्थायामेव विभाव्यमानत्वात्सुषुप्तावभावाच्चित्तवत्सदादृश्यत्वाद्वाचित्तधर्मानात्मनो धर्मायतोऽतस्तत्साक्षित्वेनविभज्यावभासमानांचेतनां स्वप्रकाशाचिदात्मस्वभावभूतांध्यायेदालोच्यतदेकमनस्तयावस्थानं ध्यानंतत्कुर्यात् ॥ यदेवंविधंध्यानमयंदृश्यानुविद्धोनामसविकल्पकः समाधिरुच्यतइतियोजना ॥ २४ ॥

एवंस्थूलसविकल्पकसमाधिमभिधाय सूक्ष्मं सविकल्प कंद्वितीयंसमाधिमाह—

असंगः सच्चिदानंदस्वप्रभोद्वै तवर्जितः॥ अस्मीतिशब्दाविद्धो यंसविकल्पःसमाहितः॥ २५॥

असंगः कामादिवृत्तिमच्चित्तसंगरहितः सच्चिदानंदोऽनृ तजडदुःखसंसर्गरहितः स्वप्रभोऽलुप्तप्रकाशस्वभावो द्वैतव र्जितोनिवृत्तसमस्तद्वैतावभासोयएवंविधः प्रत्यगात्मा सोह मस्मीतिशब्देनविद्धोयंसविकल्पः समाहितः यएवंचित्तसमा धानेनसंपादितः शब्दानुविद्धःसविकल्पकसमाधिरित्यर्थः॥

एवंयत्नतः क्रमेणसमाधिद्वयसंपत्तौ स्वयमेवभवंतंनिर्वि कल्पसमाधिमुपदिशति—

स्वानुभूतिरसावेशाद्दृश्यशब्दा वुपेक्ष्यतु॥ निर्विकल्पःसमाधिः स्यान्निर्वातस्थलदीपवत्॥ २६॥

स्वानुभूतिसच्चिदानंदानुभवः सएवरसः परमानंदः। रसोवैरसइतिश्रुतिः । तस्मिन्नावेशाच्चित्तस्यतदेकाकारता पत्तिः तस्मात्स्वानुभूतिरसावेशाद्दृश्यंकामादिवृत्तिमात्मनः शब्दोस्मीति पूर्वश्लोकेयउक्तः सतावुभौदृश्यशब्दावु पेक्ष्याभ्यांसमुद्भवंतमनादृत्य निर्वातस्थलदीपवच्चित्तस्याव स्थानंनिर्विकल्पकसमाधिः स्यादितियोजना दृश्यशब्दावु पेक्ष्यतुपुनःस्वानुभूतिरसावेशाद्यच्चित्तस्योक्तलक्षणमवस्थानं सनिर्विकल्पकसमाधिः स्यादिति वा संबंधः २६ ॥

इदानीमिदमेवसमाधित्रयंबाह्यावलंबनंव्युत्पादयति—

हृदीवबाह्यदेशेपियस्मिन्क
स्मिंश्चवस्तुनि॥समाधिराद्यःस
न्मात्रेनामरूपेपृथक्स्थतः॥२७॥

यस्मिन्कस्मिंश्चवस्तुनिसूर्यादौयत्सन्मात्रंसत्तामात्रम् व्यभिचारितस्वरूपंतस्मिन्सन्मात्रेयच्चित्तसमाधानंसमाधिरा द्यादृश्यानुविद्धानामसविकल्पकइत्यर्थः । अस्यसमाधे

विंशेषणंनामरूपपृथक्स्थितइतिनामरूपांशपरित्यागेनस न्मात्रेस्थितइत्यर्थः ॥ २७ ॥

द्वितीयंशब्दानुविधंसविकल्पकसमाधिमाह--

अखंडैकरसंवस्तुसच्चिदानंदल
क्षणम्॥इत्यविच्छिन्नचित्तेऽयंस
माधिर्मध्यमो भवेत्॥ २८ ॥

स्पष्टार्थः ॥ २८ ॥

अत्रापिनिर्विकल्पकंसमाधिमाह--

स्तव्यभावोरसास्वादात्तृतीयः
पूर्ववन्मतः ॥ एतैःसमाधिभिः
षड्भिर्नयेत्कालंनिरंतरम् ॥ २९ ॥

एतैरुक्तैः षड्भिर्बाह्यालंबनैर्हृदयाधारैश्चचित्तसमाधिभि र्निरंतरंकालंनयेत्एतेषामन्यतमेनसमाधिनाविनाक्षणमात्र मपिनतिष्ठेदित्यर्थः ॥ २९ ॥

उक्तायाःसमाधिकर्तव्यतायाअवधिंसूचयन्नुक्तसमाधि

परिपाकलब्धंनित्यसमाधिमयत्नायतिमाह—

देहाभिमानेगलितेविज्ञातेपर
मात्मनि॥यत्रयत्रमनो याति
तत्रतत्र समाधयः॥ ३० ॥

परमात्मनिसच्चिदानंदाद्वयेप्रत्यगेकरसेविज्ञातेसाक्षाद्भाव मापन्नेसतिप्राचीनेदेहाभिमानेमनुष्योहंब्राह्मणइत्यादिदेहो पनिबंधाभिमाने गलितेऽहेरिव परित्यक्तस्वनिर्मोकाय गतेस तियत्रयत्रचक्षुरादिप्रचारभूमौमनोयातिस्वभावतः प्रवर्तते तत्रतत्रसर्वत्रसमाधयः पूर्वोक्ताएवनामरूपविकारादननुबंधि नः सच्चिदानंदवस्तुमात्राकारचित्तवृत्तिरूपा निरंतरं भवंती त्यर्थः ॥ ३० ॥

एवंसाक्षात्काररूपेसमाधौसतियद्भवतितन्मुंडकवाक्येना विष्करोति—

भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसं
शयाः॥क्षीयंतेचास्यकर्माणि
तस्मिन्दृष्टेपरावरे॥ ३१ ॥

हृदयग्रंथिरहंकाराख्योभिद्यतेविदीर्य्यते। तस्मिन्भग्नेतन्मूलास्तदाश्रिताः सर्वेसंशयाआत्मविषयाःछिद्यंतेनश्यंतेसकृन्नष्टानामन्येषांपुनःकर्मवशात्प्रादुर्भावोभविष्यतीतिनाशंकाकार्येत्याह । क्षीयंतइति । अस्यविदुषःकर्माणिपुण्यपापलक्षणानिसंचितानिसर्वाणिक्षीयंतेफलपर्यंतस्वकार्यमनुत्पाद्यैवनश्यंतीत्यर्थः ज्ञानावस्थायांप्रमादकृतान्यपितानिनसंश्लिष्यंतइतिचकारेणसमुच्चीयते । प्रारब्धफलानांतुकर्मणांभोगादेवनाशइतिद्रष्टव्यम् । एतत्सर्वंकदाभवतीत्यपेक्षायामाह । तस्मिन्निति । तस्मिन्परावरेपरंब्रह्मादिअवरंमनुष्यादिपरंचावरंचपरावरंसर्वात्मकंब्रह्मतस्मिन्ब्रह्मणिदृष्टेसाक्षात्कृतेप्रपंचविलापनेनप्रत्यगेकरसतयोपलब्धेसतीत्यर्थः ॥ ३१ ॥

तदेवमादितआरभ्यतत्त्वंपदार्थशोधनपूर्वकंमहावाक्यार्थतत्त्वज्ञानसाक्षात्कारपर्यंतंसमाधानंसफलंचोपदिष्टम्॥ समाप्तः शास्त्रार्थः सर्वोपि ॥ तत्रप्रत्यग्ब्रह्मणोरेकत्ववाक्यार्थः इतियत्पुरोपदिष्टं तत्र चिदाभासस्यस्थूलसूक्ष्मोपाधिविशिष्ट

जीवस्यप्रत्यक्त्वव्युदासायसाक्षिणःपुरतोभातिलिंगं देहे
नसंयुतम् । चितिच्छायासमावेशाज्जीवःस्याद्व्यावहारिकः
अस्यजीवत्वमारोपात्साक्षिण्यपिभासतइतियोविशेषः सू
चितस्तमिदानींप्रपंचयितुंजीवाख्यप्रकरणमिदमारभ्यते—

अवच्छिन्नश्चिदाभासस्तृतीयः
स्वप्नकल्पितः ॥ विज्ञेयास्त्रिविधो
जीवस्तत्राद्यःपारमार्थिकः ॥ ३२ ॥

अवच्छिन्नोघटाकाशादिवत्प्राणादिसंघातावच्छिन्नश्चिदात्म
प्रत्यगात्मेत्येका विधा जीवस्यचिदाभासउदकइवसूर्यादे
पादौचित्प्रतिबिंबउपाधिधर्मास्कंदितोजीवइतिद्वितीयाविधा
स्वप्नकल्पितो देहोहंमनुष्योहमित्येवंस्वप्नइवस्थूलसंघाताभि
नकल्पितोजीवइतितृतीयाविधा इत्येवंजीवोहमित्येवभासम
नात्मात्रिविधोज्ञेयःतत्रतेषुमध्येआद्योअवच्छिन्नःपारमार्थि
कोजीवोविज्ञेयःइतियोजना ॥ ३२ ॥

कथमवच्छिन्नस्यपारमार्थिकत्वमित्यतआह—

अवच्छेदःकल्पितःस्यादवच्छे

ध्यंतुवास्तवम् ॥ तस्मिञ्जीवत्वमारो
पाद्ब्रह्मत्वंतुस्वभावतः ॥ ३३ ॥

निरवयवस्यमहतोभूतस्यचिद्धातोः प्राणादिभिरवच्छेदको नामस्यात्सांशस्यखलुस्तंभादेर्मूलदेशेभूविवरेणावच्छेदोऽग्रेचोत्तरावच्छादनं वंशपाल्यादिनानैवमस्यावच्छेदोऽपिनिरंशत्वादेवनापिसर्पगिलितमंडूक इवसर्पेणप्राणादिनायमवच्छिद्यते पूर्णतयातदसंभवात् । निष्कलंनिष्क्रियंशांतंपूर्णमदःपूर्णमितिश्रुतेः । नापि हस्तीवहस्तिपकेनस्वेच्छानुविधेयतयाप्राणादिनायमवच्छिद्यतेप्राणादेरेवजडस्य चिदात्मपरतंत्रतयावैपरीत्यात् । यः प्राणमंतरोयमयति यः सर्वाणि भूतान्यंतरोयमयतीतिश्रुतेः । एतेनमृदादिनेवघटादेःकारणतयाप्राणादिनावच्छेद्यता चिदात्मनः प्रत्युक्ता नचेहप्रकारांतरं पारमार्थिकंसंभवतितस्माच्चिदात्मनोवच्छेदः कल्पितः स्यादितिकथंवह्युपाध्यवच्छिन्नाश्चिदात्मा जीवइति व्यवहाराव भासावितिचेत्उपाधेःपरिच्छिन्नाद्भिनाचिदात्मनः पृथग्विविक्ततयानुपलंभादितिवदामः यथाराहुः स्वरूपेणासन्नपि

चंद्रादित्यमंडलोपरागंविनानप्रत्यक्षेणविभाव्यते तथाचिदा
त्माप्यहमुपरागमंतरेणनाविशेषतः परिस्फुरतिअतोविशेषा
कारावभासस्यपरिच्छिन्नोपाधि परतंत्रत्वादुपाध्यवच्छिन्न
चिदात्माजीवइतिव्यवहारावभासयोरुपपत्तिरितिसर्वं सम
जसमवच्छेदस्यावच्छेद्यावच्छेदकोभयनिरूपणीयस्यक
ल्पितत्वेतन्निरूपकयोरपितयोः कल्पितत्वंस्यात्ततश्च नाकिं
चित्परमार्थसदस्तीतिशून्यमतापात्तिरित्यतआह । अवच्छे
द्यंतुवास्तवमिति । अयमर्थःअवच्छेदकस्यप्राणाद्युपाधेरवा
स्तवत्वात्तत्कृतावच्छेदोप्यवास्तवः स्यान्नत्ववच्छेद्यंचि
दात्मतत्त्वमपिनहिचरणाभरणेसर्पारोपितेहि कृतचरणवेष्टन
स्यावास्तवत्वेपिचरणंतेनवेष्टमानमवास्तवंभवति तदेतदाह
वच्छेद्यंतुवास्तवंपरमार्थमेवेत्यर्थः । अतइदं सिद्धमित्युपसंह
रति।तस्मिन्निति।तस्मिन्वास्तवेचिदात्मनिजीवत्वं संसारि
त्वमारोपात् परिच्छेदकोपाध्यविवेकोत्थभ्रममात्रप्रामाणिकं
जीवत्वंतस्येत्यर्थः ॥ स्वभावतस्तुब्रह्मणत्वंपूर्णत्वमेवनपारि
च्छिन्नत्वंजीवत्वमेवेत्यर्थः ॥ ३३ ॥

तत्राद्यः पारमार्थिकइत्यस्मिन्नुक्तविशेषप्रयोजनमाह—

अवच्छिन्नस्यजीवस्यतादात्म्यं
ब्रह्मणासह॥तत्त्वमस्यादिवाक्यानि
जगुर्नेतरजीवयोः ॥ ३४ ॥

तत्त्वमस्यादिवाक्यानितत्त्वमस्यादिभिः पदैरुपाध्यव
च्छिन्नं जीवमनूद्य तस्यावच्छेदस्यावच्छेदावच्छेदकाविशे
षणांशव्युदासेन लक्षणयातत्पदलक्ष्येणब्रह्मणा सह तादा
त्म्यंब्रह्मैकस्वभावंजगुः कथयंतीत्यर्थः न पुनरितरजीव
योश्चिदाभासस्वप्नकल्पितयोर्ब्रह्मतादात्म्यंजगुस्तयोः स्वरू
पत एव कल्पितत्वे मिथ्यात्वादित्यर्थः ॥ ३४ ॥

कथंतयोर्मिथ्यात्वमित्यपेक्षायांतदुपपादयति--

ब्रह्मण्यवस्थितामाया विक्षेपावृ
तिरूपका।आवृत्याखंडतातस्मि
ञ्जगज्जीवौप्रकल्पयेत् ॥३५॥

विक्षेपावरणाभ्यांनिरूप्यमाणाचिदात्म्येब्रह्मण्यवस्थि
तामायातस्मिन्ब्रह्मणि स्वाभाविकीमखंडतामावृत्याच्छाद्य

जगज्जीवौप्रकल्पयेत् भोक्ताभोग्यंचेति विभागमनेकवि
कल्पयेदित्यर्थः ॥ ३५ ॥

तत्रकोजीवः किंवाजगदित्यपेक्षायामाह-

जीवोधीस्थश्चिदाभासोजगत्स्या
द्भूतभौतिकम्॥अनादिकालमा
रभ्य मोक्षात्पूर्वमिदं द्वयम् ॥ ३६ ॥

अविद्ययाकल्पितोजीवोधीस्थोबुद्धौप्रतिबिंबतश्चिदाभा
श्चैतन्याभासोभवतियद्यपिबिंबप्रतिबिंबयोर्न भेदोस्ति वस्
तस्तथाप्युपाधिस्थानावैशिष्ट्येनप्रतिबिंबस्यासत्त्वेआभास
श्चनबिंबधर्मोनाप्युपाधिधर्मोनाप्युभयधर्मोनापिस्वतंत्र इत्
न्यत्रप्रतिपादितम् । आभासात्मजीवोविद्याकल्पितइत्यर्थ
इदानींजगदाह । जगदिति । भूतमाकाशादिभौतिकंचरा
रदेवतिर्यङ्मनुष्यलक्षणं भवति स्याच्छब्दोभवतीत्यस्मि
र्थेभूतभौतिकलक्षणंजगद्भोग्यं धीस्थचिदाभासोभोक्तेत्यु
यमपि चिदात्मन्यखंडब्रह्मण्यविद्याविजृंभितमित्युक्तंभ
ति । नन्वनयोरविद्याकल्पितत्वेशुक्तिरजतादिवद्बाधः कद

चिद्रुपलभ्येतसनोपलभ्यतेतस्मान्नाविद्यामयत्वमित्यतआह । अनादीति ।जीवश्चजगच्चेतीदंद्वयमनादिकालमारभ्यामोक्षाद विद्यानिवृत्तिरूपात्पूर्वमनुवर्ततेतथाचयावदधिष्ठानसाक्षात्का रोनोदेतितावत्स्वप्नइवाप्रबोधोदयंनबाध्यतइत्यर्थः ॥ ३६ ॥

ननुयदिदंद्वयमनादि अनंतं चामोक्षात्तर्हिकथं सृष्टिप्रल यश्रुतिस्मृतिवादःकथंचसुषुप्तिजागरावित्यतआह—

चिदाभासेस्थितानिद्रा विक्षेपा
वृतिरूपिणी ॥ आवृत्यजीवजग
तीपूर्वं नूत्नेनकल्पयेत् ॥३७॥

चिदाभासेजीवेस्थितानिद्राअविद्याकिंलक्षणाविक्षेपावृ तिरूपिणीप्रागुक्तलक्षणासाजीवजगतीपूर्वं प्रथमं सुषुप्तिप्रल ययोरावृत्य प्रविलाप्यस्वात्मसात्कृत्वापुनःप्रबोधसृष्टौ नू- त्नेननूतनरूपेणकल्पयेत्पुनर्जीवजगद्व्यवहारंप्रवर्तयेदित्यक्ष- रयोजना अविद्याकल्पितस्यचिदाभासस्याविद्याश्रयत्वायो गादहमज्ञइत्याविद्यातस्मिन्नुस्फुटतरावभासमपेक्ष्यचिदाभासे

स्थितानिह्वेत्युक्तमिति द्रष्टव्यम् यद्वापूर्वश्लोकेचिदाभासोजी वस्तद्भोग्यं चभूतभौतिकरूपं जगद्व्यावहारिकमुभयं च्चिदानंदब्रह्मचैतन्यस्थानाद्यविद्याविक्षिप्तमामोक्षं दंडाय मानमुदितम्। अस्मिंस्तुश्लोकेचिदाभासेस्थितानिद्रेतिआव णप्रधानाप्रत्यगविद्योच्यते तयास्वप्नकल्पितोजीवस्तद्भोग्यं जगत्प्रातिभासिकमुभयंप्रतिपादितमितितात्पर्यार्थोद्रष्टव्यः । व्याख्यातम् ॥३७॥

एतयोःकथंप्रातिभासिकत्वमित्यपेक्षायामाह—

प्रतीतिकालएवैते स्थितत्वात्प्राति भासिके ॥ नहिस्वप्नप्रबुद्धस्यपु नःस्वप्ने स्थितिस्तयोः ॥ ३८ ॥

एतेअनंतरोक्तेजीवजगतीप्रतीतिकालएवप्रतिभासस यएवनपुनरस्तात्नपश्चात्स्थितत्वात्प्रातिभासिके उच्येते इ त्यर्थः । उक्तंप्रतीतिकालमात्रभासत्वमनुभवोक्त्यद्रढयाति। नहीतिस्वप्नात्प्रबुद्धस्यावस्थांतरं गतस्य पुंसः पूर्वदृष्टयोस्त योः पुनः स्वप्ननिवृत्त्युत्तरकालमपि । नहि स्वप्नेस्थितिर

स्तितथादर्शनादेवेत्यर्थः । स्वप्नदृष्टस्यावस्थांतरेस्वप्नांतरेवा संवादाभावात्प्रातिभासकालमात्रतयासिद्धं प्रातिभासकत्व मितिभावः ॥ ३८ ॥

तदेवंजीवत्रयं विभज्यतत्राचिदाभासस्वप्नप्रकल्पितयो र्जीवयोः सभोग्ययोरुत्पत्तिकारणमनाद्यज्ञानगतकार्यकर णावस्थाद्वयंप्रदर्श्येदानीं त्रयाणांजीवानांमिथोभेदमनुभवा वष्टंभेनोपपादयति त्रिभिः—

प्रातिभासिकजीवस्तु जगत्तत्प्रा
तिभासिकम् । वास्तवं मन्यतेय
स्तुमिथ्येतिव्यवहारकः ॥३९॥

प्रातिभासिकजीवस्तुयः सतुजगत्स्वप्नकल्पितं शुक्तिरज तादिकं च प्रातिभासिकंजगद्वास्तवंमन्यतेपरमार्थमेतदित्यव गच्छतीतियोजनात्यस्तुपुनः प्रागुक्तजगत्मिथ्येति मन्य तेसव्यावहारिकोजीवइतियोजना ॥ ३९ ॥

एवंप्रातिभासिकजीवाद्व्यावहारिकस्यभेदमुक्त्वातस्मा त्पारमार्थिकस्यजीवस्यभेदमाह—

व्यावहारिकजीवस्तु जगत्तद्व्याव
हारिकम् ॥ सत्यंप्रत्येतिमिथ्येतिम
न्यते पारमार्थिकः ॥ ४० ॥

यस्तत्व्यावहारिकंजाग्रद्दशापन्नमविसंवादित्वेनाभिम
तंजगत्सत्यमवितथंकालत्रयाबाध्यमितिप्रत्येति प्रतिपद्य
तेसतुव्यावहारिकजीवइतियोजनायस्त्वेतत्जगत्मिथ्येतिम
न्यतेसपारमार्थिकोजीवइत्यर्थः ॥ ४० ॥

इदानींपारमार्थिकस्यजीवस्यपूर्वस्माद्भेदमाचक्षाणस्त
स्याद्वयब्रह्मैक्ययोग्यतांसूचयति—

पारमार्थिकजीवस्तुब्रह्मैक्यंपार
मार्थिकम्॥प्रत्येतिवीक्षतेनान्य
द्वीक्षितत्वनृतात्मना ॥ ४१ ॥

यस्तुब्रह्मैवैक्यंपारमार्थिकमितिप्रत्येति ब्रह्मणोन्यदप्य
स्तीतिनवीक्षतेसतुपारमार्थिकजीवइतियोजना । यदिक्कदा
चिद्वीक्षतजगत्परिच्छिन्नाकारं तदाप्यनृतात्मनाबाधितत्वे
नैवेक्षतेनपूर्वयोरिवस्वविषयंपारमार्थमीक्षतइत्यर्थः । अथ

भावः । यावदुपदेशतः शास्त्रतोवानुमानतोवाद्रष्टृदृश्ययोर्विवे
कज्ञानंनलभतेतावत्संघातमेवद्रष्टारंतद्दृश्यंचविषयं पारमा
र्थंमन्यतेलोकः सएवंमन्यमानोविवेकज्ञानवद्भिः प्रातिभा
सिकजीवइत्युच्यते।यस्तुपुनरुपदेशादिनासंघातादन्यो द्रष्टा
तद्दृश्यंचविषयंनपरमार्थं किंतुतदनुगते कारणात्मन्याविर्भा
वतिरोभावाभ्यां विक्रियते तच्चाविसंवादात्परमार्थइति मन्य
तेसव्यावहारिकोजीवइतिपरमार्थदर्शिभिरुच्यते । यस्तुपुनः
सम्यक्शास्त्रार्थमनुभवपर्यंतमवधार्य न कार्यकारणभावःपार
मार्थिकः किंतुव्योम्नीवतलमलिनत्वादिपूर्णब्रह्मणि प्रत्यक्त
त्त्वेभ्रांतत्वेभ्रांत्यवभासएवेतिमन्यते सपारमार्थिको जीवइ
तिशास्त्रार्थतत्त्वविद्भिरुच्यतेइति ॥ ४१ ॥

ननु व्यावहारिकप्रातिभासिकयोर्जीवयोश्चिदाविद्याक
ल्पितत्वेजडत्वात्कथंजीवत्वंजीवोहिचिदात्माप्रसिद्धोनेन
जीवेनात्मनानुप्रविशेतिश्रुतेरित्याशंक्यदृष्टांतेनानिराकर्तुं
दृष्टांतमाह--

# माधुर्यद्रवशैत्यादिजलधर्मास्त

रंगके॥अनुगम्याऽपितान्निष्ठफेने
प्यनुगतायथा ॥ ४२ ॥

जलस्यस्वाभाविकाधर्मास्तदवस्थाविशेषेप्यनुगता यथो पलभ्यंतइतिदृष्टांतइत्यर्थः । साक्षिस्थाः सच्चिदानंदसंबंधा व्यावहारिके॥तद्द्वारेणानुगच्छंतितथैवप्रातिभासिके ४२॥

साक्षिशब्देनप्रत्यगभिन्नंब्रह्मविवर्त्यतेतस्यस्वभासवासभू ताएवसच्चिदानंदास्तस्यधर्मत्वेनकल्पयित्वा व्यपदिश्यंते सा क्षिस्थाःसच्चिदानंदाइतितेव्यावहारिकलिंगोपाधिमवष्टभ्येह लोकपरलोकगमनाव्यवहारवत्त्वेनकल्प्यंते जीवे संबद्धाभवं तिजलस्यतरंगवत्परस्यैवचिदात्मनोवस्थांतरत्वादस्य तद्ध र्मानुवृत्तिर्युक्तेत्यर्थः तद्द्वारेणव्यावहारिकजीवद्वारेणप्राति भासिकेपिजीवेनगच्छंतिसच्चिदानंदालिंगद्वारादिस्थूलोपा धावात्मभावाइतिकृशोहमित्याद्यभिमन्यमानेपि प्रातिभा सिकेजीवेफेनइवशैत्यादयो धर्माः सच्चिदानंदाअनुगच्छं तीत्यर्थः एवमात्मधर्माणामध्यारोपमुपपाद्यापवादप्रका रमाह--

प्रातिभासिकजीवस्यलययेस्यु-
र्व्यावहारिके ॥ तल्लयेसच्चिदानं
दाःपर्यवस्यंतिसाक्षिणि ॥ ४३ ॥

सुषुप्तिमोक्षयोः क्रमेण लीयमानप्रातिभासिकव्यावहारिकजीवगताः सच्चिदानंदाः साक्षिशब्दनिर्दिष्टप्रत्यग्ब्रह्मणिपर्यवस्यंतिशैत्यादयइवफेनतरंगगतास्तयोर्लयेसमुद्रेनान्यत्रतेसंतीत्यर्थ इति ॥ ४३ ॥

॥ इतिवाक्यसुधासमाप्ता ॥



श्रीः ।

# वेदान्तसिद्धान्तः ।



ॐ श्रीगणेशाय नमः ॥ ॐ रामंसर्वगुणातीतंमायागुण समाश्रयम् । नत्वावेदांतसिद्धांतदीपिकेयंप्रतन्यते ॥ १ ॥ आपातकृतन्यासानांविप्राणामल्पमेधसाम् । सुखंब्रह्मपदं गंतुमियमेवभविष्यति ॥ २ ॥ इहयथारज्ज्वज्ञानात्सर्पः प्रकाशते तत्तत्त्वज्ञानाच्चोपशाम्यत्येवमात्माऽज्ञानादिदं स्वप्नप्रभंजगदधिष्ठाने ब्रह्मण्यवभासते तत्तत्वज्ञानेन निवृत्तिमेतीत्यभिप्रेत्यसंसारदावानलविप्लुष्टांतः करणस्यविषयसुखमपि दुःखपक्षेनिक्षिप्य हिरण्यगर्भादिसुखेष्वप्युद्विग्नचित्तस्य सर्वमूलाज्ञाननिवृत्तौयतमानस्यतन्निवृत्तिलक्षणतत्त्वज्ञानोत्पत्तौ जीवपरमात्मनोरभेदभावनामुपदिशत्याचार्योनिमित्तमित्यादिना--

निमित्तंमनश्चक्षुरादिप्रवृत्तौनिर
स्ताखिलोपाधिराकाशकल्पः ॥

रविर्लोकचेष्टानिमित्तंयथायःसनि स्योपलब्धिस्वरूपोहमात्मा ॥१॥

नन्वकृतमंगलाचरणकृतोयंग्रंथइतिनाशिष्टोपादेयंभविष्यतीतिचेन्न । आत्मस्मरणलक्षणमंगलस्यकृतत्वान्नोक्तदोषोद्भवः । मंगलानांचमंगलमितिव्यासोक्तेः । मनश्चचक्षुश्चमनश्चक्षुषीतेआदिभूतेयस्यसमनश्चक्षुरादिः करणसमूहः । भूतोत्पत्तिक्रमेण मनःश्रोत्रादीतिवक्तव्ये छांदोग्यप्रसिद्धभूतत्रयपक्षप्राधान्यमादायमनश्चक्षुरादीत्युक्तम् । आदिशब्दः प्रत्येकंसंबंधमेति । तथा च सतिमनआदीनांमनोहंकारबुद्धिचित्तानां चक्षुरादीनांचक्षुःश्रोत्रत्वग्रसनघ्राणानां बुद्धींद्रियाणां वागादीनां वाक्पाणिपादपायूपस्थानां पंचकर्मेंद्रियाणां स्वस्वविषयादानेविषयाभिमुखप्रवृत्तिस्तत्रनिमित्तं तटस्थभूतोहेतुर्यः सोहमात्मा नतुमृदादिवद्विकारित्वम् । अत्रात्मशब्देन स इति तच्छब्दलक्ष्यःकल्पितप्रपंचाधिष्ठानभूतः सर्वनियंतापरमात्मोच्यते । आत्मावाइदमेकएवाग्रआसिन्नान्यत्किंचनमिषदित्यादिवेदांतवाक्ये

ष्वात्मशब्दस्यपरमात्मनिप्रसिद्धत्वात् । अहमितिचत्वं पदलक्ष्यार्थः प्रत्यगात्माकूटस्थउच्यते । तयोश्चसामानाधिकरण्येनाभेदोबोध्यते । यदिपुनरहंशब्देनाहंकारविवक्षा तदातुबाधायांसामानाधिकरण्यम् ।कीदृगात्मानित्योपलब्धिस्वरूपः नित्याचासावुपलब्धिश्चेतिनित्योपलब्धिःज्ञानंस्वरूपंयस्यसतथोक्तः।ननुघटोपलब्धिर्जातापटोपलब्धिर्नष्टेति तदुत्पत्तिविनाशयोः प्रत्यक्षसिद्धत्वात्कथमुपलब्धिर्नित्येति चेत्तयोरुत्पत्तिविनाशयोर्घटपटज्ञानसंबंधविषयत्वात् । ननु संबंधंविनाप्रवर्त्तकत्वासंभवात्संबंधेवासंगत्वक्षतिःसधर्मकत्वावानिश्चेत्यतआहानिरस्ताखिलोपाधिरिति।निरस्तानिर्गताअखिलानिःशेषादेहेंद्रियादयस्तद्धर्मलक्षणाश्चोपाधयोवस्तुतोयस्मात्सनिरस्ताखिलोपाधिःअतएवाकाशकल्पआकाशसदृशःआकाशादीषज्जडत्वमात्रांशेनन्यूनःसर्वानुगतोप्यसंगएवेत्यभिप्रायःसर्वानुगतोप्याकाशवद्विशुद्धइत्यर्थः। यथाव्यापकत्वेनसर्वानुगतोप्याकाशोव्याप्यगुणदोषभाग्न भवति निरवयवस्यतस्यव्याप्यसंगासंभवात् तस्यावय

वधर्मत्वात् मूर्तामूर्त्तयोः कात्स्न्यैकदेशाभ्यां तन्निरूपणा नर्हत्वाच्च । एवंदेहेंद्रियोपाधिसंबंधानर्हत्वमात्मन्यवगन्तव्यम् । समवायस्तुकार्यकारणगुणगुणिजातिव्यक्त्यादौ।नतु ब्रह्मणितदस्ति । सकारणजगदधिष्ठानकारणत्वोपचारात् । क्वचिच्छ्रूयमाणमपि ब्रह्मणः कारणत्वमन्यकारणव्युदासायैकत्वप्रत्ययदार्ढ्यार्थं न कायकारणभावप्रतिपादनाय । वास्तवकारणत्वे नेहनानास्ति किंचनेत्यादिश्रुतिबाधप्रसंगात् । माययाकारणत्वेतुपरमार्थतोऽकारणत्वं ब्रह्मणः पर्यवस्यति । तदुक्तम् । इहरज्जुघटादिहिसावयवंसमुपैतियुजामितरेतरतः । इतिदृष्टमतोन्यददृष्टमपिस्वयमूह्यमिदंत्वपरित्यजता इति। नन्वविग्रहस्यात्मनोमनश्चक्षुरादिप्रवर्त्तकत्वंवागादिव्यापारंविनाकथमित्याशंक्य तद्वहि तस्यापि स्वरूपसत्तामात्रेणप्रवृत्तिहेतुत्वंरविदृष्टांतेनदर्शयति । [१]रविः सूर्यः श्रुतिस्मृतिपुराणोक्तकर्मानुष्ठानेयालौकिकानांप्रवृत्ति

---

१ यथारवि :श्रौतस्मार्त्तकर्मानुष्ठानेलौकिककृषिवाणिज्यादिव्यवहारेचतदुपदेशादिव्यापाररहितोपिसत्तामात्रेण निमित्तंस्वयमेवाहेउदितआदित्येसर्वे, पिलौकिकाव्यवहरंतिनतुसूर्यस्तानुपदिशति एवंकुरुध्वमिति ।

क्रियाकरचरणादीनांव्यापारस्तस्यनिमित्तं यथायेनप्रका रेणतदुपदेशव्यापाररहितोपिस्वरूपसत्तामात्रेणैवकारणं भ वतितद्वदहमपिमनश्चक्षुरादिप्रवृत्तिहेतुर्भवामीत्यर्थः ॥ १ ॥

ननुमनश्चक्षुरादीनानस्वप्रवृत्तावन्यापेक्षातानिस्वतएव प्रवृत्तिलक्षणानीत्याशंक्योत्तरमाह--

यमग्न्युष्णवन्नित्यबोधस्वरूपं
मनश्चक्षुरादीन्यबोधात्मकानि ॥
प्रवर्तंतआश्रित्यनिःकंपमेकं स
नित्योपलब्धिस्वरूपोहमात्मा ॥ २ ॥

यमित्याश्रित्यपदेनसंबध्यते । मनश्चक्षुरादीनिताव त्प्रवर्त्तमानानिजडत्वाद्रथादिवच्चेतनप्रवर्त्तकमंतरेण न प्रव र्तितुमर्हंति । तथा च यमाश्रित्यप्रवर्ततेचेष्टंतेयत्प्रकाशि तानिस्वस्वविषयादाने क्षमाणि भवंति सोहमित्यन्वयः । वैशेषिकाद्यभिमतं बोधात्मनोर्गुणगुणिभावमपाकर्तुमग्न्यु ष्णवद्दृष्टांतेनपूर्वोक्तंनित्यबोधस्वरूपत्वमेवाह । अग्न्युष्ण वत् इति। अग्नेरुष्णेनतुल्यं भवतिइत्यग्न्युष्णवत् उष्णंयथा

ग्नेर्नातिरिच्यतेअतिरिक्तेघटादिवत्ततोन्यत्राप्युपलभ्येत । य
तस्तद्व्यतिरेकेणनोपलभ्यतेउष्णं ततोग्निस्वरूपमेव तथास्व
रूपावयवधर्मलक्षणविनाशसामग्रीरहितत्वात् । नित्योयोबो
धस्तदेवस्वरूपंयस्यसनित्यबोधस्वरूपस्तम् मनश्चक्षुरादीनि
मनआदीन्यंतःकरणानिचक्षुरादीनिबाह्यानिकरणानि शरी
राणि च तानि चजडान्यबोधात्मकत्वाद्बोधादन्योऽबोधोज
डंतदेवात्मास्वरूपंयेषांतानितथोक्तानितेषां चरथादिव चेत
नप्रवर्तकं विनाप्रवृत्तिर्नसंभवतिनित्यबोधस्वरूपात्मप्रेरिता
निप्रवर्तंते । स्वरूपसत्तामात्रेणैवायस्कांततपनयोर्लोहलो
कप्रवृत्तिहेतुत्ववत्प्रवृत्तिहेतुत्वं न तु कायवाग्व्यापारवत्त्वं
विक्रियांविनैवप्रवर्तकत्वंदर्शयति। निःकंपंनिर्गतः कंपः क्रि
यायस्मात्सतथोक्तस्तंनिस्त रंगंनिःसंशयमित्यपिकेचित् ।
श्रुतिंचात्रदर्शयति भेदनंहृदयग्रंथेः सर्वसंदेहच्छेदनम्॥ कर्म
णांचक्षयः पुंसः परमात्मनि वीक्षित इति । एवं कीटादि
ब्रह्मांतेष्वनुगत्वमेकोदेवः सर्वभूतेषुगूढइतिश्रुतेः । एक
एवतुभूतात्माभूतेभूतेव्यवस्थितः । इतिश्रुतेश्च । एकमिवि

सांख्यवैशेषिकादिमतापकरणमवगंतव्यम् । ननु चेतना धीनाजडप्रवृत्तिरित्युक्तं तथाचात्मनश्चेतनत्वे किं प्रमाणमि तिचेत्तच्छृणु । साक्षी चेता केवलोनिर्गुणश्चेत्यागम स्यैवतत्प्रमाणत्वात् । बोधशब्देनापितस्यैवाभिलापात् । ननुतर्हितं द्धर्मा पुरुषइतिचेन्न । चैतन्यमात्मनो भिन्नंनवा । आद्येधर्मधर्मिभावोनस्यात् । ऋक्षसिंह योरिव । नचतयोरसंबंधान्नतथा । चैतन्यस्यत्वात्म संबंधित्वात् । किंनभवेत्तद्धर्मइतिवाच्यम् । संबंधः सं-योगोवासमवायोवा । संयोगस्यद्रव्यधर्मत्वाच्चैतन्यस्य भवन्मतेगुणत्वात् । नापि समवायः तस्यगुणगुणिजा तिव्यक्त्यादिधर्मत्वात् । तद्विपरीतेआत्मानितदसंभवात् । तथाहि नात्माद्रव्यम् अस्थूलमनण्वह्रस्वमदीर्घमित्यादिद्रव्य धर्मप्रतिषेधात् । साक्षाच्चनिर्गुणत्वोपदेशात् । नापिगु णस्तस्यनित्यापराश्रयत्वात् । सभगवः कस्मिन्प्रतिष्ठितः स्वमहिम्नीत्यादावात्मनश्चस्वमहिमप्रतिष्ठितत्वश्रवणात् ।

१ आत्मचैतन्ययोरद्रव्यत्वान्नतत्संभवः राहोः शिरइतिवद्भेदेपिभेद-व्यपदेशः ।

नापिजातिः । नित्यमनेकानुगतत्वाभावात्तद्व्यतिरेकेणेत रेषामनित्यत्वात् । नापिव्यक्तिर्जातिप्रत्याख्यानेनैवतत्समा नयोगक्षेमायास्तस्याअपि प्रत्युक्तत्वात् । किंच समवायः समवायिषुसंबद्धोवासमवायिनः संबंधयेदसंबद्धो वा । आ द्ये संयोगेन समवायस्याद्रव्यत्वात् । नापिसमवायेनस्वे नैवचेत्स्वात्माश्रयःसमवायांतरेणचेदन्योन्याश्रयः । अपरे णैव चेच्चक्रकानवस्थादिदोषप्रसंगः । असंबद्ध एवसंबंधांत रेणसमवायः । स्वयंसंबंधस्वरूपत्वात्समवायिनासंबंधय तीति चेत् । हिमवद्विंध्ययोरपिसमवायप्रसंगः संयोगे चा तिप्रसंगः । सोपि हि स्वयंसंबंधरूपएवसन्समवायेनेव संयो गिषुसमवेतीत्यभ्युपगम्यतेभवता । तस्माद्बोधात्मनोः संबंधा संभवाद्बोधएवात्मानबोधधर्मीस्वस्यचस्वधर्मत्वे घटोपि घ टधर्मी स्यात् । उक्तं च निरंशत्वाद्विभुत्वाच्च तथानश्वरभा वतः। ब्रह्मव्योम्नोरभेदोस्तिचैतन्यब्रह्मणोधिकम् ॥ २ ॥

ननुमनश्चक्षुरादिप्रवर्तकस्यात्मनस्तत्संयोगोस्तिनवा।अस्ति चेदद्रव्यत्वासंगत्वनिर्धर्मकत्वादीनां क्षतिःस्यात् ।नचेत्प्रवर्त कतासंभवइतिशंकामपाकरोत्युत्तरश्लोकेनमनश्चक्षुरादेरिति-

मनश्चक्षुरादेर्वियुक्तःस्वयंयोमनश्च क्षुरादेर्मनश्चक्षुरादिः ॥ मनश्चक्षुरादेरगम्यस्वरूपःसनित्योपलब्धिस्वरूपोऽहमात्मा ॥ ३ ॥

मनश्चक्षुरादेर्वियुक्तोविगतसंबंधः संयोगसमवाययोः पूर्वमेव निराकृतत्वात् । आध्यासिकसंबंधमंतरेण संबंधांतरस्यसंभवात् । ततश्च करणमात्रसंबंधरहितस्तस्य च भासको योयमात्मा सोहमित्यन्वयः । यथाहुः—वदनाद्युदितं वदनेनसदानयनेन नपश्यतियं चसदा । श्रवणेन च यं न शृणोतिसदामनसापिचयेमनुतेनसदा ॥ वदनंनयनं च तथाश्रवणं मनएवच येन ततं सततम् । अवगच्छतदेवपदं परमं त्वमितिश्रुतिरीक्षितुरुक्तवती ॥ तस्मात्संयोगाद्यनंगीकारान्नतुआत्मानि तद्दोषप्रसक्तिः । ननु तत्संबंधाभावात्कथं तत्प्रवर्तकत्वमित्याशंक्योत्तरमाह । मनश्चक्षुरादेर्मनश्चक्षुरादिरिति । मनसोमनोमनस्त्वापादकोमनसोव्यापारहेतुरित्यर्थः । एवंचक्षुषःचक्षुश्चक्षुष्ट्वापादकएवंम

त्येकमन्वयोद्रष्टव्यः । श्रुतिरप्यत्र श्रोत्रस्यश्रोत्रंप्राणस्य प्राणोमनसोमनइत्यादिवाजसनेयिनाम्अयमभिप्रायःनश्रोत्रं स्वयमेवशब्दश्रवणसमर्थंकिंतर्हिचैतन्यज्योतिषादीप्तंतस्माद्य च्छ्रोत्रेणश्रवणसामर्थ्यंतदात्मनिमित्तमित्यात्माश्रोत्रस्यश्रोत्रं श्रोत्रत्वापादक इति । एवमन्यत्राप्यूह्यम् । यथाकुलालह स्ताधिष्ठितो दंडो घटोत्पत्तिहेतुर्भवति तथा चिदधिष्ठितानि करणानिस्वस्वविषयोपलब्धिहेतुतांयांति । अतएवमनश्चक्षु रादिविषयताचितो नास्ति ।नहि कल्पितत्वमोधिष्ठानस्यस वितुस्तद्विषयतातद्व्यतिरेकेण तस्यांतरासंभवात् ।मनश्चक्षु रादेरित्यादिना । श्रुतिरप्यमुमर्थमाह-न तत्र चक्षुर्गच्छति नवाक्गच्छतिनमनोनाविद्याइति । नचक्षुषागृह्यतेनापिवा चेत्यादि । ननुऔपनिषदत्वमात्मनोमनआद्यगोचरत्वेव्या हन्येत। मनसैवेदमाप्तव्यंनहृदामनीषामनसाभिक्लृप्तइतिचो परुध्येत न औपनिषदत्वात्मनिउपनिषज्जन्यज्ञानविष यत्वम् । नतुतज्जन्यातिशयाधारत्वंयेनव्याघातः स्यात् । तदुक्तम्। फलव्याप्यत्वमेवास्यशास्त्रकृद्भिर्निराकृतम् । ब्रह्म

ण्यज्ञाननाशायवृत्तिव्याप्तिरपेक्षितेति । तदेवञ्चवृत्तिव्याप्य त्वंमनसैवेदमाप्तव्यमित्यर्थः । यद्वातदाकारांतःकरणवृत्त्युत्पादकत्वमेवतद्विषयत्वमुपनिषदः । यद्वामनश्चक्षुरादेर्वियुक्तोव्यतिरिक्तः । नचात्मापरिच्छिन्नश्चक्षुरादिव्यतिरिक्तत्वात् घटवत्इतिवाच्यम् । आकाशादौहेतोः साध्यव्यभिचारस्तस्य नित्यव्यापकत्वेनतदव्यतिरिक्तत्वेपिदेशकालवास्तुपरिच्छेदाभावात् । अथवास्वयमेवोत्तरमाह मनश्चक्षुरादेर्मनश्चक्षुरादिरिति । अयमर्थः यद्यप्यात्मामनश्चक्षुरादिव्यतिरिक्तस्तथापितेषांमनश्चक्षुरादीनामात्मन्यध्यस्तत्वेनरज्जुसर्पवदध्यस्तस्याधिष्ठानादन्यत्वाभावादित्युक्तं पुरस्तात् । उक्तं ब्रह्मवित्पूज्यचरणेनपराशरेण व्यतिरिक्तंनयस्यास्तिव्यतिरिक्तोखिलव्ययइति । तेषातत्राध्यस्तत्वादधिष्ठानत्वेनतदगम्यस्वरूपोभवतीत्यर्थः । तदुक्तंसंक्षेपशारीरके-नहिभूमिरूषरवती मृगतृणजलवाहनीरसंवहति । मृगवारिपूरपरिवारवतीननदीतथोषरभुवंस्पृशतीति ॥ ३ ॥

ननुनित्यबोधस्वरूपपरमात्मस्वरूपतैवत्वंपदार्थस्योक्ता

तथाच्चबंधमोक्षसुखादिव्यवस्थाअन्यस्यैवभविष्यति । न त्वात्मनस्तस्यसकलधर्मातीतब्रह्मस्वरूपत्वादित्यतआह----

मुखाभासकोदर्पणेदृश्यमानोमुख त्वात्पृथक्त्वेननैवास्तिवस्तु॥चिदा भासकोधीषुजीवोपितद्वत्सनित्यो पलब्धिस्वरूपोहमात्मा ॥ ४ ॥

मुखाभासकइति । मुखस्याभासोमुखाभासोमुखाभास एवमुखाभासकइति । स्वार्थे कप्रत्ययः । मुखप्रतिबिंबोदर्प णादिप्रतिबिंबोपाधौदृश्यमानः प्रतीयमानोमुखत्वात् । भावे त्वप्रत्ययः । परमार्थभूतात् मुखात्पृथक्त्वेनभेदेननैवास्ति वस्तुयद्यपिभासतेतथापिवस्तुतो नास्त्येव वस्तुभूत इत्यर्थः । तथापि नानादर्पणजातिषु नानेवप्रतिभासंतेमुखाभासाः । ए वंचितश्चैतन्यस्याभासश्चिदाभासः एवंचिदाभासकोधीषु बुद्धिषु जीवः प्राणानांधारयितातद्वदिति पूर्वेणान्वयः । अ यमभिप्रायः । यथाबिम्बप्रतिबिंबव्यवहाररहितंमुखंचंद्रा दिर्वानानोपाध्यनुगतःपरमार्थस्वरूपवैपरीत्येनभासते तथा

सजातीयविजातीयस्वगतभेदरहितसच्चिदानंदस्वरूपंब्रह्मना
नांतःकरणोपाध्यनुगतंबद्धमुक्तगुरुशिष्यादिव्यवहारंभजते
नतु चिद्धातुबुद्धिगतश्चित्प्रतिबिंबः पृथग्वस्तु । अन्यथा
ज्ञातेपि तत्वज्ञानेतत्प्राप्तिर्न स्यात् । अन्यस्यान्यरूपताद-
र्शनादहिनकुलवत् । एवंभूतोयोयमात्मासोहमित्यन्वयो-
न्यत्पूर्ववत् । ननु सिद्धपारदयोगादयसः कांचनता दृष्टा क
मन्यस्यान्यरूपता नोपलभ्यत इति चेन्न । त्रोटकाचा
र्यरेवापकृतं तत्पृथक्खंडनमनुष्ठीयते । तद्यथा-उदकावय
वानभिभूयपयोरजतावयवांश्च यथा कनकम्।विपरीतभातिंज
नयत्युदकेरजते च तथायसि हेमभातिम् ॥ रसवीर्यविपाकवि
नाशमनुप्रगमिष्यति कांचनताप्ययसः । कृतकं हि ननित्य
मितिप्रकृतिंसमवेतमवश्यमपैति यतः ॥ तथा च वस्तुतोभि
न्नयोरभेदानुपपत्त्यातदभेदेमोक्षशास्त्रवैयर्थ्यंस्यात् ॥ ४ ॥

ननजीवस्यब्रह्मरूपत्वाद्बंधोऽसंभवोबद्धोहिमुच्यतेनाबद्ध
इति । तदुपाधेस्तत्त्वज्ञानबाध्यत्वात् । कस्य मोक्षस्तस्माद्बं
धमोक्षयोरसंभवान्मोक्षप्रतिपादकंशास्त्रमप्रमाणमेवेतिशंकाम
पाकरोति—

यथादर्प्पणाभावआभासहानौमु
खंविद्यतेकल्पनाहीनमेकम् ॥
तथा धीवियोगेनिराभासकोयः
सनित्योपलब्धिस्वरूपोहमात्मा॥५॥

यथादर्पणाभावआभासहानाविति ॥ यथायद्व र्पणे उत्सारिते तदभावे वाआभासहानौसत्यां निमित्ताभावेनैमि त्तिकस्याप्यभाव इतिप्रसिद्धेः । मुखप्रतिबिंबेनिवृत्तेनिरु पाधिकंमुखमात्रं विद्यते कल्पनाहीनं द्वैविध्यभानभ्रमरहितं बिंबप्रतिबिंबव्यवहारहीनं परमार्थमुखमेव विद्यतइत्यर्थः । दृष्टांतं दर्शयित्वा तद्वदुपाध्यभावे दार्ष्टान्तिकेप्येतद्दर्शयाति । तथा धीवियोग इति । तथातेनैवप्रकारेणधियोबुद्धेर्वियोगे तत्त्वमस्यादिवाक्योत्थयाखंडाकाराकारिताचित्तवृत्त्या अविद्यातत्कार्यबाधेनिवृत्तेसति योनिराभासकोनिर्गत आभासोयस्मात्सः तथा ।स्वार्थेकप्रत्ययः।निःप्रतिबिंबोजी वब्रह्मविभागरहितः सोहमित्यन्वयः । नित्योपलब्धिस्व रूपइत्यादिपूर्ववत्सर्वत्र।अयमभिप्रायः । आत्माज्ञानोद्भूतो

योबुद्ध्यादिरुपाधिस्तत्रप्रतिबिंबरूपेणात्मानमध्यस्यतद्धर्मं चसुखदुःखादिकमात्मन्यध्यस्यतिसोयमध्यासलक्षणोबंधस्तत्त्वज्ञानेनसकारणस्यतस्यबाधएवमोक्षइतिसर्वमनवद्यम् ॥ ५ ॥

ननुनिःकंपमेकमित्यादिनासर्वशरीरेष्वेकएवात्मोक्तस्तच्च नसंभवतितथासत्येकस्मिन्सुखिनिसर्व एव सुखिनःस्यु र्दुःखिनि वा दुःखिनोभवेयुर्नत्वेवमस्त्येव बंधमोक्षगुरुशिष्य जन्ममरणादिव्यवस्थान्यथानुपपत्त्याप्रतिशरीरमात्मांतर सिद्धिः । तथाचकणादोदितंसूत्रं "नानात्मानोव्यवस्थातः" इतिशंकामपाकर्तुंश्लोकमवतारयति । यएकोविभातीति । यद्वायद्यात्मामनश्चक्षुरादेरगम्यस्वरूपस्तदाकथमस्यसिद्धिः पदार्थमात्रस्यतदधीनसिद्धिकत्वादात्मसिद्धावपितदेवसाधन मुचितमन्यथातद्रहितस्यखपुष्पादिवदत्यंतासत्यत्वमेवस्या दित्यत आह—

यएकोविभातिस्वतःशुद्धचेताःप्रकाशस्वरूपोपिनानेवधीषु ॥ शरावो-

दृक्स्थोयथाभानुरेकःसनित्यो
पलब्धिस्वरूपोहमात्मा ॥ ६ ॥

एक अद्वितीयः सजातीयविजातीयस्वगतभेदरहितः। वृक्षस्यस्वगतोभेदः पत्रपुष्पफलादितः । वृक्षांतरात्सजातीयो विजातीयः शिलादितः । एकोदेवः सर्वभूतेषुगूढः सर्वव्यापी सर्वभूतांतरात्मा । अजोह्येकः। एकोवशीसर्वभूतान्तरात्मा । एकमेवाद्वितीयंब्रह्म।एकंनिविष्टंबहुधागुहासु । क्षेत्रज्ञंचापि मांविद्धिसर्वक्षेत्रेषुभारत । अहमात्मागुडाकेशसर्वभूताशयास्थितः । अविभक्तंचभूतेषुविभक्तमिवचास्थितम् । एकएवतुभूतात्माभूतेभूते व्यवस्थितः । एकधाबहुधाचैव दृश्यतेजलचंद्रवत । समोमशकेन समोनागेनेत्यादिश्रुतिस्मृतिवाक्यसचिवेनैवइतिपदेन सांख्यवैशेषिकादिमताभ्युपगतोनानाजीववादो निराकृतइत्यवगंतव्यम् यानिचजन्ममरणसुखदुःखादीन्यात्मभेदसाधकानि लिंगान्युदाहृतानि तैस्तान्येतदुदाहृतवाक्यापहृतविषयत्वात्कालात्ययोपदिष्टानीत्यवगंतव्यम् । तुल्याचसंसर्गतानेकात्मवादे एक

स्मिन्नात्मनि सुखिनिदुःखिनि वा सर्वात्मनां सुखदुःखादि
मत्त्वप्रसक्तिविभुत्वेनसर्वदेहगतत्वात्सर्वात्मनां विभाति प्रका
शते स्वतःस्वयमेवनतुज्ञानकर्मत्वेन घटादिवत् । तेषांजड
त्वेनप्रमाणांतरापेक्षास्वरूपप्रकाश उचितैव नतु. स्वस्फुरण
स्वरूपस्यात्मनः । अदृष्टोद्रष्टानान्योतोस्ति द्रष्टेतिश्रुतेः
शुद्धंनिर्मलरजस्तमःक्रोधादिमलानभिभूतं चेतश्चित्स्वरू
पं यस्यशुद्धचेताः पुरुषस्तस्यस्वतएवसाधनं विनैवात्मा
स्फुरतीत्यर्थः । यद्वाआत्मनोभेदासिद्धौ प्रमाणापेक्षामपाक-
रोति । स्वतइति । प्रमाणापेक्षांविनैवासिद्धमवगतंचेतः चैत
न्यंज्योतिः स्वरूपं यस्यसतथोक्तः । यतोवाचोनिवर्त्तते अ
प्राप्यमनसासहेति नतत्रचक्षुर्गच्छतिनवाग्गच्छतिइत्यादि
प्रमाणाविषयत्वमात्मनउपपादनंपुरस्तात् । अपिशब्दः एक
पदेनसंबध्यते स्वप्रकाशस्वरूप एकोप्यात्माअनेकासुधीषु
बुद्धिषुप्रतिबिंबतामवाप्य तत्तद्गतसुखदुःखाद्यनेकोपाध्य
धिष्ठानत्वेननानेव प्रतिशरीरं भिन्न इवविभातिप्रकाशतेप्रती
यते वा यः सोहमित्यन्वयः। दृष्टांतमाह । शरावोदकस्थः

ति । शरावेषुउदकानिशरावोदकानिशरावशब्देनप्रतिबिं बोपाधिजलपूर्णपात्रमवगंतव्यंनतुपार्थिवताग्रहम् । तेषुतिष्ठ तीतिशरावोदकस्थः । यथायद्यप्येकएवभानुरादित्योनाना बहुरूपोनिश्चलचंचलस्वच्छमलिनादिभेदेन प्रतिभातीतिसं बंधः । एवमात्माप्येकएवपरमार्थतःसन्मायाकल्पितमौ ढ्यपांडित्यशौर्यभीरुत्वादिभेदभिन्नासु नानाबुद्धिषुनानेव भासतइत्यर्थः ॥ ६ ॥

ननुभवत्वात्मनउपाधिरूपादेकस्यैव बहुधाव्यवस्था कथंनिरीहस्यदेहेन्द्रियादिसंबंधरहितस्य सर्वधर्मातीतस्य श्रुतिस्मृतिपुराणसिद्धस्येहलोकपरलोकगतिरुपपद्यतइत्याशं क्य जलचांचल्येन चंद्रचांचल्यवदुपाधिगत्यातत्रगति भ्रमोनत्वमूर्तस्यगतिः संभवतीतिदृष्टांतपूर्वकमाह—

यथासूर्यएकोप्यनेकश्चलासुस्थि
रास्वप्यबन्वग्विभाव्यस्वरूपः ॥
चलासुप्रभिन्नासुधीष्वेकएवसन्नि
त्योपलब्धिस्वरूपोहमात्मा ॥७॥

यथासूर्यएकइति । यथायेनप्रकारेणशरावादिगतासुचं चलासु स्वच्छत्वमलिनत्वाद्युपाधिविशिष्टास्वप्सु जलेषुप्र तिबिंबितः सूर्यएकोनेकोनानारूपतयाप्रतिभासतेनत्वाका शेदेदीप्यमानस्य रवेर्भ्रममंतरेण बहुत्वस्वच्छत्वमलिनत्वा दिकंकालत्रयेऽप्यस्ति । चलासुचंचलासुस्थिरासुस्थिरासु तिष्ठंतीषु अपिशब्दः स्वच्छमलिनबहुस्वल्पादिसमुच्चया र्थः । अबन्वग्विभाव्यस्वरूपः अपामनुगच्छतीत्यबन्वक् अपांगमनं स्वच्छत्वमलिनत्वाद्युपाधिवैशिष्ट्यमधिगच्छती त्यर्थः । तत्रतद्वद्विभाव्यंजलचलनाद्यनुकारेणानुकृतंस्वरू पंयस्यसतथा । अन्येत्वनन्वग्विभाव्यस्वरूपइतिपाठमं गीकुर्वंते । व्याख्यातंचतैरेव अन्वंचतिगच्छतीत्यन्वक् ना न्वगिति । अनन्वक्तेनाविभाव्यंस्वरूपंयस्यसतथोक्तः । एवंबहुव्रीहिसमासंकृत्वापश्चान्नञासमासः कर्त्तव्यः अय मर्थः रविर्जलानुगतोनभवत्यपितुतथैवाकाशेदेदीप्यमानो भ्रान्त्याजलानुगतःप्रतीयते । दृष्टांतंदर्शयित्वादार्ष्टांति कमाह चलासुकर्म्मानुसारेणेहलोकपरलोकगमनशीलासु

भिन्नासुप्रतिशरीरं तिष्ठंतीषुधीषुतदन्वग्विभाव्यस्वरूपस्तद्ग त्यादिधर्मेणधर्मवानिवभ्रांत्याप्रतीयमानोनतुस्वतः क्रियात स्यामूर्त्तस्यतदसंभवात् । ध्यायतीवलेलायतीवेतिश्रुतेः । सइत्यादिपूर्ववत् ॥ ७ ॥

तस्मात् गुरुशिष्यबंधमोक्षस्वर्गनरकादिव्यवस्थोपाधि गतात्मनि चंद्रादिचांचल्यवत् भ्रांत्याप्रतीयते नत्वक्रिय स्यनिरस्तधर्माधर्मसंबंधस्य कापिचेष्टासंभवतीत्युक्तंतन्न सुं दरं बुद्ध्यादिवदात्मनः क्रमद्रष्टृत्वेनतद्वदेवपरिणामित्वमना त्मत्वं परिच्छिन्नताचाकिंनस्यादित्याशंक्ययादिक्रमद्रष्टत्वं स्यात्तदैवंस्यान्नत्वेवमस्त्यन्यथाघटदर्शनोत्तरकालएव संदे होविपर्ययोवास्यान्नत्वेवमस्तितस्माद्बुद्धिस्तद्वृत्तयः सत्यः कदाचिदविदितानातिष्ठंतीतिदृष्टांतपूर्वकमाह—

यथानेकचक्षुःप्रकाशोरविर्नक्रमेण
प्रकाशीकरोतिप्रकाश्यम् ॥ अने
काधियोयस्तथैकःप्रबोधःसनित्यो
पलब्धिस्वरूपोहमात्मा ॥ ८ ॥

यथानेकचक्षुःप्रकाशोरविरिति । यथायेनप्रकारेण रविरादित्योनेकचक्षुःप्रकाशः अनेकानियानिचक्षूंषितेषां प्रकाशो यस्यसोनेकचक्षुःप्रकाशो युगपदनेकानि चक्षूंष्यधि तिष्ठतीत्यर्थः । नतुक्रमेणैकैकस्य चक्षुषःप्रकाशीकरोति तदधिष्ठातृत्वेनतदनुगतत्वात् । अनेकचक्षुषांप्रकाशोने कचक्षुःप्रकाशः । अत्रबहुवचनस्यत्रित्वमात्रपर्यवसानं न कल्पनीयंसर्वान्कपिंजलानालभेतइत्यादिवत्तत्राशक्यत्वात् तथाकल्पना । अत्रतुतस्यैवसर्वाधिष्ठातृत्वात्सर्वप्रका शकत्वंनतुबुद्ध्यादिवत्क्रमेणप्रकाशीकरोतिप्रकाश्यं अप्र काशान्प्रकाशान्करोतीति प्रकाशीकरोतीतिच्विप्रत्य यः । अभूततद्भावेकृभ्वस्तियोगेसंपद्यकर्त्तरिच्विः । अप्रका शात्मकंजडंवस्तुजातमुदयमात्रेणप्रकाशयतीत्यर्थः । तथा तेनैवप्रकारेणैकश्चासौप्रबोधोऽधिष्ठाता अनेकाधिय इतिद्वि तीयाबहुवचनम् । अनेकान्यंतःकरणानितद्वृत्तीश्चयोयुगप त्प्रकाशीकरोतिसोहमात्मेतिसंबंधः । नतुक्रमेणतानित द्वृत्तीर्वातत्प्रकाशयति । ननुबुद्धिसाक्षीबुद्धिव्यतिरिक्तोना

स्वितसैवग्राह्यग्राहकतयेतिशाक्यभिक्षुपक्षीयाः प्रत्यवति ष्ठंतेतेचापाकृताश्लोटकाचार्यैः । तथा विदितत्वमवि प्रतिपन्नतयाप्रतिषुप्रगतंविषयेषुयथा । यतएवमतःपरसं विदिताविदितत्वतएवयथाविषयाः । ननुभवंतुमतयः प रसंवेद्याःस्वसंवेद्यतायां तुनकंचनदोषंपश्यामइत्यतआह । परसंविदिताः सततंहियतोनविदुः स्वममीविषयास्तुत तः । मतयोपितथापरसंविदितानविदुः स्वममूर्विषयास्तु यथेति ॥ सइत्यादिपूर्ववत् ॥ ८ ॥

ननु सर्वप्रवर्त्तकत्वेन बुद्धितद्वृत्तीनामपिरविरेवास्तुप्रवर्त कः किमात्माभ्युपगमेन । तथाचश्रुतिः—योदेवःसवितास्म कंबुद्धिवृत्तिप्रवर्त्तकः इतिगायत्रीव्याख्यानेयोगियाज्ञव ल्क्योप्युक्तवान् । चिंतयामो वयं भर्गंधियोयोनःप्रचोदया त् । धर्मार्थकाममोक्षेषुबुद्धिवृत्तीः पुनःपुनरित्याशंक्यतत्रा- पिसवितृपदस्यसूते जगदिति योगाश्रयणेनब्रह्मपरतैवेत्याह । विवस्वत्प्रभातमिति । यद्वानित्यबोधस्वरूपआत्माअक्रमप्र- काश इत्युक्तं तदसत्तत्साधकप्रमाणाभावेनाजडप्रकाशरूप- स्यकस्यचिदसंभवात्संभवे वा प्रमाणविषयत्वेनघटादिवज्ज-

इत्वादयोदोषाःस्युरित्याशंक्यदृष्टांतपूर्वकमुत्तरमाह--

विवस्वत्प्रभातं यथा रूपमक्षं प्रगृ-
ह्णातिनाभातमेवं विवस्वान् ॥ य-
द्राभातमाभासयत्येकमेकं सनि
त्योपलब्धिस्वरूपोहमात्मा ॥९॥

विवस्वतादित्येनप्रभातं प्रकर्षेण भातंप्रकाशितं तत्प्र
भयाव्याप्तं रूपादिवस्तुजातं यथायेनप्रकारेणाक्षंचक्षुः प्र
गृह्णाति प्रकर्षेणनीलपीतादिगुणवैशिष्ट्येनबोधयतीत्यर्थः
नाभातंनतदप्रकाशितम् । दृष्टांतमुक्त्वादार्ष्टांतिकमाह । एव
मुनाप्रकारेण विवस्वान् सूर्यो यदाभातंयेनचिद्रूपेणप्रका
तं भासयति एकंप्रधानं समस्तस्यजगतोक्षंचक्षुरेकमक्षंभग
वदक्षत्वेन प्रधानतोचितैव । अयमभिप्रायः नयनाधिष्ठातृत्वे
नादित्यानुग्रहोपेतंचक्षूरूपादिगृह्णाति तथा भगवत्तेजसोधि
ष्ठानभूतो विवस्वानपि तत्प्रसादोपेतएवजगत्प्रकाशयतिस
जगच्चक्षुःस्थानीयस्यरवेर्भगवदनुग्रहमंतरेणप्रकाशकत्वं न
स्ति । किंपुनरन्येषामितिदर्शयितुंतदुक्तम् । ननु विवस्वद

दिप्रकाशमपि यथान्येनानुगृहीतं प्रकाशयति । तद्वदात्मापि केनचित्प्रकाशांतरेणानुगृहीतमेव प्रकाशयति इतिचेन्न तस्यापि स्वप्रकाशेन्यापेक्षायामनवस्थास्यात्तदतिरिक्तस्य प्रकाशस्याभावात्तस्यापि जडत्वे जगदान्ध्यं स्यात् । नान्योतोस्ति द्रष्टेत्यादिवेदांतकदंबेन द्रष्ट्रंतरस्यप्रतिषेधाच्च । यदादित्यगतंतेजो जगद्भासयतेखिलम् । यच्चंद्रमसि यच्चाग्नौ तत्तेजोविद्धिमामकमिति ज्योतिषामपितज्ज्योतिस्तमसः परमुच्यते इतिस्मृतेश्च प्रतिषिद्धप्रकाशान्तरालाघवादात्मैवानन्यप्रकाशोभ्युपगंतव्यः । तथाच सूर्यादिगतप्रकाशमात्रस्य तत्प्रकाशत्वान्नतत्परप्रकाश्यतेति । स इत्यादिपूर्ववत् ॥ ९ ॥

ननु स्वप्रकाशस्वरूप आत्मासर्वजगत्प्रकाशक इत्युक्तंतच्च न संभवति । सर्वसंबंधे संगत्वक्षतिरतिरिक्तसंबंधे च परिच्छिन्नता स्यात् घटादिवदित्याशंक्योत्तरमाह–

समस्तेषु वस्तुष्वनुस्यूतमेकं सम
स्तानि वस्तूनियन्न स्पृशंति ॥ विय
द्वत्सदा शुद्धमच्छस्वरूपं स नि
त्योपलब्धिस्वरूपोहमात्मा ॥ १० ॥

समस्तेष्विति। समस्तेषु प्रत्यक्षादिप्रमाणगोचरेषु मूर्तामूर्त वस्तुजातेष्वनुस्यूतमनुगतं सच्चिद्रूपाभ्यां सन्नु घटः सत् जलं सतीव्यक्तिरित्यादिजडपदार्थेषु सत्तान्वयप्रतीतेः । घोरमूढ धीवृत्योर्द्वयोरप्यात्मनोन्वयाभ्युपगमात् । घटसत्वं पटसत्व मित्यादौ विशेषणीभूतानां घटादीनामेव भेदः प्रतीयतेनतुवि शेष्यांशेनप्रत्ययो भवति । यदि तु विशेषणभेदप्रत्ययस्यान्यथानु पपत्याविशेष्यभेदोभ्युपगंतव्यस्तदा घटाकाशमठाकाशादा वपि विशेष्यभेदः प्रमाणसिद्धः स्यात् । तथाच सामान्याभ्यु पगमोऽपसिद्धांतः स्यात् इति नाकिंचिदेतत् । ननु सर्वानुगतं महासामान्यमेकमात्मा तुनतथा तदसत् । सदेवसोम्येदमग्र आसीदितिश्रुतेः । असन्नेव सभवति । असत्ब्रह्मेति चेद्वेदअ स्ति ब्रह्मेतिचेद्वेदसंतमेनं ततोविदुरित्याद्याब्रह्मस्वरूमेव स त्त्वं प्रतिपादयंति ब्रह्मात्माव्यतिरिक्तसत्तानभ्युपगमात् । वि शेषणभेदेपिविशेष्याभेदमपाकरोति । एकंभेदाविशिष्टेष्वनुस्यू तमपिनिर्भेदं समस्तानिवस्तूनियदात्मस्वरूपं शुक्तिरजतवन्न स्पृशंति । नतत्रस्वसंबंधमापादयंति। कल्पितस्यस्वरूपासत्त्वे

नाधिष्ठानसंबंधाभावात् । निरवयवशुद्धस्य व्याप्यगुणदोषा लेपेदृष्टांतमाह ।वियदाकाशः यथा सर्वगतमपि शुद्धमेकं तथा सर्वांतर्यामित्वेन सर्वानुस्यूतमपि शुद्धं निर्मलं बुद्ध्यादिगत रागादिमलरहितम् । प्रज्ञानमेवेति श्रुतेः। अतएवाच्छस्वरू पमच्छं स्वच्छं सर्गादिसर्वधर्मातीतं यद्वस्तु सोऽहमात्मेत्यन्व यः।असंगो नहि सज्जते।असंगोह्ययं पुरुष इतिश्रुतेः १०॥

नन्वसंगश्चेदात्मा कथमहंसुखी दुःखी संसारी बद्ध इत्या दिधर्म्मवत्तया प्रतीयते इत्याशंक्याह——

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा
मन्यतेनिःप्रभं चातिमूढः ॥ तथा
बद्धवद्भाति यो मूढदृष्टेः स नित्यो
पलब्धिस्वरूपोहमात्मा ॥ ११ ॥

घनच्छन्नदृष्टिरिति। घनेन मेघेन छन्ना आच्छादिता दृष्टि र्दर्शनं चक्षुर्यस्य स घनच्छन्नदृष्टिःपुरुषः घनाभिभूतदृष्टिरित्य र्थः।स घनच्छन्नं घनेनाभिभूतं यथायेनप्रकारेणार्कमादित्यंम न्यते जानाति कथंभूतमर्कं निःप्रभं निर्गताप्रभा दीप्तिर्यस्मात्स

तथोक्तस्तम् ।नन्वल्पपरिमाणेनकथंमहत्परिमाणस्यरवेश्छन्नत्वं मन्यते इत्याशंक्याह । अतिमूढः अतिशयेन विवेकरहित इत्यर्थः । दृष्टांतमुक्त्वा दार्ष्टांतिकमाह तथा आदित्यविपरीतभानप्रकारेण बद्धः संसारी सुखदुःखीतितेनतुल्येवर्ततइति बद्धवत् । ननु वस्तुतोमूर्त्तस्याद्वितीयस्याविद्यादिसंबंधाधिष्ठानस्य बंधमोक्षौ संभवतस्तयोरवस्तुभूतत्वात् । तदुक्तं श्रुतौन निरोधो न चोत्पत्तिर्न बद्धो नच साधकः।नमुमुक्षुर्नवै मुक्त इत्येषा परमार्थतेतिश्रुतेः । वस्तुगत्या एवंभूतोपि मूढः आत्मानात्मविवेकरहितादृष्टिर्बुद्धिर्यस्य स मूढदृष्टिः पुरुषस्तस्य वेदांतश्रवणसंस्काररहितांतःकरणस्य एवंभाति सोहमित्यन्वयः ॥ ११ ॥

तथाच जन्ममरणसुखदुःखस्वर्गनरकबंधमोक्षादिव्यवस्थोपाधिगतैवात्मनि सर्वधर्मातीते केवले निरस्ताविद्यात्कार्यसंबंधेभ्रमात्प्रतीयते इतिदृष्टांतपूर्वकमाह—

**उपाधौ यथा भेदतासन्मणीनां**
**तथा भेदता बुद्धिभेदेषु तेपि॥ यथा**

चंद्रिकाणां जले चंचलत्वं तथा
चंचलत्वं तवापीह विष्णो ॥ १२ ॥

उपाधाविति ॥ उप समीपे आधीयते स्थाप्यते यःस उपाधिर्जपाकुसुमादिःनिर्गुणस्य निर्भेदस्य निष्क्रियस्य च सगुणसक्रियसभेदेन यद्भानकारणं तदुपाधिः । तदेव दृष्टांतपूर्वकमाह । सनूमणीनामिति विशुद्धमणीना यथा येनप्रकारेण जपाकुसुमादींद्रनीलमण्यादिसंबंधात्तमुपरागमवाप्य शुद्धस्फटिकादीनामपि तत्तदाकारेण भानं भवति । दार्ष्टांतिकमाह । तथा तेन मण्यादिप्रकारेण बुद्धीनां भेदाः बुद्धिभेदास्तेषु बुद्ध्याद्युपाधिषु सत्सु तेपि तवापि भेदता नानारूपता कूटस्थत्वादिरूपेण भवति । तद्यथाअधिष्ठानतयादेहद्वयावच्छिन्नचेतनः कूटवन्निर्विकारेण स्थितः कूटस्थ उच्यते । अज्ञानोपहितं बिंबचैतन्यमीश्वरः अंतःकरणतत्संस्कारावच्छिन्नअज्ञाने प्रतिबिंबितं चैतन्यं जीव इतिकेचित् । इंद्रियैरस्मिन्घटसंनिकर्षे अंतःकरणमपि अस्मिद्वा-

रा घटाकारतामेति तच्च सावयवत्वात्परिणम्यमानं देहाभ्यंत
रघटादौ देहघटयोर्मध्ये च सम्यग्व्याप्य वर्त्तते तत्रच देहम
ध्यवर्त्ती तद्भागोहंकाराख्यः कर्तृशब्दवाच्यो भवति । देह
विषयमध्यवर्त्तीदंडायमानस्तद्भागो वृत्तिज्ञानाख्यः क्रिया
शब्दाभिधेयो भवति । घटादिविषयव्याप्तः तद्भागो विषयस्य
ज्ञानकर्मत्वापादकोभिव्यक्तियोग्यमित्युच्यते । त्रिभाग
स्यांतःकरणस्यातिस्वच्छत्वाच्चैतन्यं तत्राभिव्यक्तिमेति ।
तत्राभिव्यक्तस्य चैतन्यस्यैकत्वेप्यभिव्यंजकांतःकरणभाग
लक्षणोपाधित्रैविध्यात्तस्यापि त्रैविध्यं व्यपदिश्यते। कर्तृभा
गानुगतश्चिदात्मा प्रमाताक्रियाभागानुगतश्चिदंशः प्रमाणंविष
यानुगताभिव्यक्तियोग्यत्वभावावच्छिन्नश्चिदंशः प्रमितिरिति
विषयगतं ब्रह्मचैतन्यमज्ञातं सत्तदेव फलमित्युच्यते
बिंबप्रतिबिंबमुखानुगतमुखस्वरूपवत् । जीवेश्वरानुगतं
सर्वानुसंधातृचैतन्यं साक्षीत्युच्यते । ईश्वरोपि त्रिविधः स्वो
पाधिभूताविद्यागुणत्रयभेदात्सोपि ब्रह्मविष्णुरुद्रभेदात् त्रि
विधो भवति । कारणीभूतसत्वगुणविशिष्टो विष्णुः पालकः

कारणीभूतरजोगुणविशिष्टो ब्रह्मा स्रष्टा हिरण्यगर्भस्तु न ब्रह्मामहाभूतकारणत्वात् । स्थुलभूतकारणत्वेनौपचारिकीब्रह्मेति संज्ञा । कारणीभूततमोगुणाविशिष्टत्वाद्रुद्रः संहर्ता । ब्रह्मोपाधिस्तु सूत्रकारेणैवोपदिष्टः । जन्माद्यस्य यत इति। अस्य प्रत्यक्षादिप्रमाणगोचरस्य जगतो यतो निमित्ताज्जन्मादिजन्मस्थितिभंगं तद्ब्रह्म । ब्रह्मसंज्ञाप्यौपाधिक्यैवात स्य संज्ञासंज्ञिसंबंधरहितत्वात् । तथा जीवोपि त्रिविधः । उपाधिभेदेन विश्वतैजसप्राज्ञसंज्ञाभेदमधिगच्छति । तद्यथा अविद्यांतःकरणस्थूलशरीराविशिष्टो जाग्रदवस्थाभिमानी विश्वः । विष्वण्वस्थूलशरीराभिमानरहित उपाधियावछिन्नःस्वप्नाभिमानी तैजसः शरीरांतःकरणोपाधिद्वयहीनांतःकरणसंस्कारावच्छिन्नाज्ञानमात्राविशिष्टः सुषुप्त्यवस्थाभिमानी प्राज्ञः।एवं स्तंबादिब्रह्मांतास्थ्यंबकचतुर्मुखाद्याः संज्ञास्तथा सरस्वतीश्रीभवानीत्याद्याश्चैतस्यैवोपाधिभेदेन संज्ञा अवगंतव्याः । सर्वं खल्विदं ब्रह्मेति श्रुतेः । ननु सर्वात्मकत्वेन सर्वत्र सर्वदा चेतसत्त्वमात्मनःकथमिह लोकपरलो

कादौ कर्मनिबंधना तत्क्रियापुराणादौ प्रसिद्धा तस्यामूर्तध र्मत्वादित्याशंक्याह।यथा चंद्रिकाणामिति । चंद्रिकाश्चंद्रप्र तिबिंबालक्षणयोच्यंते।चंद्रका इति पाठेपि चंद्रप्रतिबिंबा ए वावगंतव्याःस्वार्थे कप्रत्ययः।यथा आकाशे देदीप्यमानस्य चंद्रमसः चंचलत्वं स्वच्छत्वं मलिनत्वं तत्रनसंभवति केवलं भ्रांत्यातद्धर्मत्वेन प्रतीयतेप्रतिबिंबद्वारा तथा हे विष्णो हेव्या पनशील इहपुराणाद्युपवर्णितकर्मकार्यसंसारमंडल आध्या सिकसंबंधबुद्धिगतचंचलत्वमूढास्तदधिष्ठाने ब्रह्मणाधिग च्छंति।नतु निरस्तधर्माधर्मसंबंधेत्वयि कापि क्रिया संभवति। ध्यायतीवलेलायतीवेतिश्रुतेः। नचान्यथा ख्यात्याभ्युपगमो वृत्त इतिवाच्यमत्र सर्वधर्मविशिष्टस्याज्ञानबुद्ध्यादेरारोपा भ्युपगमाद्धर्मिणोन्यत्र सत्वानभ्युपगमात्तच्छंकायानावका शलेशोपीति सर्वमनवद्यम् ॥ १२ ॥

इति श्रीवेदांतसिद्धांतदीपिकाहस्तामलकटीका समाप्ता॥

---

श्रीः

# अथ निर्वाणपंचकम् ॥

ॐ श्रीगणेशाय नमः ॥ शंकरं परमानंदं सच्चिदानंद विग्रहम् ॥ नित्यं निरंजनं शंभुं नमामि जगदीश्वरम् ॥ १ ॥ नाकृतं कृतेभवति । अकृते मोक्षं कृतेन कर्मणा न भवति इति कर्मपक्षनिरासः । भेदोपासनायां दोषमाह ।

ॐ आत्मनि अन्यत्र वेद अथ तस्य योन्यां देवता मुपासते मृत्योःसमृत्युमाप्नोति यइहनानेवपश्यति द्वितीयाद्वै भयं भवति यस्तस्मिन्नुदरमंतरं कुरुते अथ तस्य भयं भव तीत्यादिवाक्यं श्रुत्वा परीक्ष्य लोकान्कर्मचितान् वैहस्मै म्यब्राह्मणो निर्वेदमायात इति प्रव्राजिनोलोकमेतमिच्छं तः प्रव्रजंति ब्राह्मणाः किं प्रजया करिष्यामो येषां नोयमा त्माऽयं लोकः तमेव विदित्वातिमृत्युमेतीतिश्रुतेः । पुत्रैषणा याश्च वित्तैषणायाश्च लोकैषणायाश्चव्युत्थायाथब्राह्मणाभि क्षाचर्यंचरंति।निर्वेदमायातः त्वंपदार्थविवेकायसंन्यस्य सर्व कर्मणां शांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वागुरुंमपृच्छे

त् कस्मिन्नु भगवोविज्ञाते सर्वमिदं विज्ञातं भवति।तथाच श्रुतिः। आत्मनि खल्वरेदृष्टे इदं सर्वं विज्ञातं भवति ।यथासोम्यैकेनमृत्पिंडेन सर्वमृण्मयं विज्ञातंस्यात् । वाचारंभणंविकारोनामधेयं मृत्तिकेत्येव सत्यं इत्यादिश्रुतीनांसिद्धांतंमनसिनिधाय निर्वाणपंचकं शिष्याय प्राह भगवान्शंकरः—

नाहं देहोनेंद्रियाण्यंतरंगंनाहंकारः प्राणवर्गो नबुद्धिः॥दारापत्यक्षेत्रवित्तादिदूरः साक्षी नित्यः प्रत्यगात्माशिवोहम् ॥ १ ॥

नाहंदेहइति । अहं अयंपरिदृश्यमानस्थूलदेहोन।कथमितिचेत् तस्याऽनात्मत्वात् । अनात्मत्वं कथमिति चेत् । जडत्वात्. दृश्यत्वात् भूतकार्यत्वात् शुक्रशोणितजन्यत्वात् । यद्यद्भूतकार्यं तत्तदनात्मा यथा घटः । इंद्रियाण्यप्यनात्मरूपाणि । भतकार्यत्वात् एवंमतरगम् । नोप्यनात्मासंकल्पविकल्पकत्वात् । सुषुप्तौ अभावात् ।तस्मादिदं मनोप्यनात्मा बुद्धिरिति अनात्मा कथमि

तिचेत् । त्रिगुणात्मकत्वात् । निश्चयात्मकत्वात् । तस्मा
त् इयं बुद्धिरनात्मा । अहंकारोप्यनात्मा कथमितिचेत् क
र्तृत्वभोक्तृत्वसुखित्वदुःखित्वादियुक्तत्वात् सर्वानर्थमूल
कारणत्वात् सुषुप्तौ अभावात् । तस्मादहंकारोप्यनात्मा
प्राणवर्गोप्यनात्मा कथमितिचेदुच्यते प्राणापानव्यानोदा
नसमानरूपाः । अंतरबाधव्युत्पत्तित्वात् तस्मात् प्राणव-
र्गोप्यनात्मा देहादिबुद्धिपर्यंतेन ग्रंथेन स्थूलदेहसूक्ष्मदेहनि
रासःयावत् उपलक्षणं शरीरमप्यनात्मा।कारणं नाम अवि
द्या साचतुर्विधा अनित्ये नित्यबुद्धिः अशुचौ शुचिबुद्धिः
असुखे सुखत्वबुद्धिः अनात्मन्यात्मबुद्धिः स्थूलसूक्ष्मशरी
रद्वयस्यकारणम्। अतः त्रिगुणात्मकं स्वस्वरूपज्ञानाविरोधि
च।अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जंतवः।इतिभगवद्वचनात्
एतादृशमज्ञानं कथं नाशितमिति चेत्।ज्ञानेन तु तदज्ञानं
येषां नाशितमात्मनः।तेषामादित्यवत्ज्ञानंप्रकाशयतितत्परम्
॥ १ ॥इति भगवद्वचनात्। आत्मज्ञाननिष्ठानामज्ञानं नास्त्ये
व । अज्ञानं कथंभूतमिति चेत् तच्छृणु । अज्ञानमध्यारो

पापवादपूर्वकम् । यथा असर्पभूतायांरज्जौ सर्पारोपवद्व
न्यवस्त्वारोपोध्यारोपवस्तुसच्चिदानंदाद्वयं ब्रह्म अज्ञानं
कलजडसमूहोऽवस्तु । अज्ञानमपि द्विविधं ज्ञानशक्तिंक्रि
शक्तिभेदात् रजस्तमोरहितं सत्वं ज्ञानशक्तिरित्युच्यते ।
त्वात्संजायते ज्ञानं रजसोलोभएवचेतिस्मृतेः।क्रियाशक्ति
विधा । आवरणशक्तिर्विक्षेपशक्तिश्च । रजःसत्वरहितंत
आवरणशक्तिरित्युच्यते । कृष्णं तमः आवरणात्मकत्वात्
इति तमःसत्वरहितरजोविक्षेपशक्तिरित्युच्यते । र
सो लोभ एवचेति स्मृतेः।लोभादीनां विक्षेपकत्वं प्रसिद्धम्
अथवा अज्ञानमपि द्विविधं मायाअविद्याभेदात् । चै
न्यमपि त्रिविधं साक्षीश्वरजीवभेदात्।पुनः मायासमष्टिरू
त्रिविधा । कारणसूक्ष्मस्थूलभेदात् । अविद्याव्यष्टिरूप
त्रिविधा।कारणसूक्ष्मस्थूलभेदात् । पुनः ईश्वरोपित्रिवि
ईश्वरहिरण्यगर्भविराड्भेदात् । अथवा ब्रह्मविष्णुशिव
दात् । जीवोपि त्रिविधः प्राज्ञतैजसविश्वभेदात् । तथा
ईश्वरस्य समष्टिरखिलकारणत्वात्कारणशरीरम् । आनंद
चुरत्वात् कोशवदाच्छादकत्वात् आनंदमयः कोशः ।

र्वोपरमत्वात् सुषुप्तिः । हिरण्यगर्भस्य समष्टिस्थूलप्रपंचापे
क्षया सूक्ष्मत्वात्सूक्ष्मशरीरं विज्ञानमयः कोशः । ज्ञानशक्ति
मान् कर्तृरूपःमनोमयकोशः।इच्छाशक्तिमान् करणरूपःप्राण
मयकोशः ।क्रियाशक्तिमान् कार्यरूपःजाग्रद्वासनामयत्वात्
स्वप्नःविराजःसमष्टिस्थूलभोगायतनत्वात् स्थूलशरीरं अन्न
विकारत्वात् अन्नमयः कोशः । श्रोत्रादिज्ञानेंद्रियशब्दादि
विषयज्ञानत्वात् जाग्रत्प्राज्ञस्य व्यष्ट्यहंकारादिकारणत्वा
त् कारणशरीरम् आनंदप्रचुरत्वात् कोशवदाच्छादकत्वात्
आनंदमयकोशः । सर्वोपरमत्वात्सुषुप्तिः तैजसस्यापि व्यष्टि
स्थूलप्रपंचापेक्षया सूक्ष्मशरीरं विज्ञानमयमनोमयप्राणमयः
कोशःजाग्रद्वासनामयत्वात् स्वप्नः विश्वस्य व्यष्टिःस्थूलभो
गायतनत्वात् स्थूलशरीरं अन्नविकारत्वात् अन्नमयः
कोशः । श्रोत्रादिज्ञानेंद्रियशब्दादिविषयज्ञानत्वात् जाग्रत्
एवं समष्टिव्यष्ट्योर्वनवृक्षयोरिव एतदुपहितयोरीश्वरजीव
योरपि वनवृक्षावच्छिन्नाकाशयोरिवाभेदः वनवृक्षतदव
च्छिन्नाकाशयोर्वा आधारानुपहिताकाशवत् अनयोराधा

रभूतं यदनुपहितं चैतन्यतुरीयं साक्षि इत्युच्यते। अयमेवाध्य
रोपः । अपवादो नाम यथा रज्जुविवर्तस्य सर्पस्यावस्तु
अज्ञानस्य प्रपंचस्यअपि ब्रह्ममात्रंभवति एवं सर्वद्वैतोपमर्द
न अज्ञानं नश्यत्येव तर्हिंअस्त्येवाज्ञानम्।प्रकृते किमात्म
दारापत्यक्षेत्रवित्तादिदूरः इति । पत्नीपुत्रक्षेत्रधनादिकमं
परित्यज्यस्थूलदेहेनसह स्वर्गं वा नरकं वा गच्छति व्याव
रिको जीवः संसारी स एव। इहलोके परलोकादिषु संच
तीति सर्वानुभवसिद्धमितिकिंवक्तव्यम् ।तर्हिं इदंपरिदृश्य
नं देहमपिअविषयकं प्रत्यक्षं यथातथाब्रह्मादिपिपीलिकांत
रोक्षप्रत्यक्षरूपंसर्वं जगत् मायिकमनात्मरूपम्। चिदात्मा
दृश इत्यत आह । साक्षीति। ज्ञाताज्ञातं साक्षादीक्षते इ
साक्षी द्रष्टा।ननु एकः कूटस्थो निर्धर्मकः साक्षीनाद्रियते
प्रामाणिकत्वात् इति चेन्न । तमेव भांतमनुभाति सर्वं तस्
भासा सर्वमिदं विभाति। नदृष्टेर्द्रष्टारं पश्येत्।अदृष्टोद्रष्टान
न्योतोस्ति द्रष्टानान्योस्ति मंता इत्यादिवेदांतप्रमाणराजे
तस्यैव सर्वसाक्षित्वेनाभिषिक्तत्वात् । नित्यः कालत्र

प्यबाध्यमानः देशतः कालतः वस्तुतः परिच्छेदरहितः । शिवः सच्चिदानंदस्वरूपः मायाविद्याजगज्जीवेश्वरादिदृश्या दृश्यप्रपंचविलक्षणः प्रत्यगात्मा साक्षी ब्रह्मैव सत्यंतस्मात्तअन्यत्सर्वमंनित्यं स आत्मा सोहमस्मीति।अस्मिन्नर्थे श्रुतिस्मृतिप्रभृतीनि बहूनि प्रमाणानि । ब्रह्मविद्ब्रह्मैव भवति । तरतिशोकमात्मवित् । शिवमद्वैतं चतुर्थं मन्यंते । निष्कलो निष्क्रियो निर्विकारोनिर्विकल्पोनिरंजनः शुद्धोदेवएको नारायणः पुरुषएवेदꣳसर्वं । सर्वंखल्विदं ब्रह्म । नेहनानास्ति किंचन।तथाचस्मृतिः।अजो नित्यःशाश्वतोऽयं पुराणो नहन्यते हन्यमाने शरीरे। इत्यादिश्रुतिस्मृतिसहस्रेभ्यः ।श्रुतिस्मृतीममैवाज्ञा इति प्राह स्वयंहरिः।तद्वेदितव्यं मुमुक्षुभिः आत्मनोऽन्यत्र प्रियां त्वां रोदिष्यसि पामरादेहवादिनःइदं मे स्यात् इदं मेभूयात् इदंमेपुनर्भविष्यतीतिदुःखसंसारार्णवे मज्जंति । तदुक्तं कैश्चित् ।अलभ्यमानस्तनयःपितरौक्लेशयेच्चिरम्।लब्धोपि गर्भपातेन प्रसवेनचबाधते ॥ १ ॥जातस्य ग्रहरोगादिः कुमारस्य च मूढता । उपनीतेप्यविद्यत्वमनु

द्वाहश्च पंडिते ॥२॥ यूनश्च परदारादिदारैश्चंचकुटुंबिनः। पित्रोर्दुःखस्य नास्त्यंतोधनी चेन्म्रियतेतदा॥ ३॥एवंआशापाशक्लेशाहंकारादिकर्तृत्वभोक्तृत्वसुखित्वदुःखित्वजन्मप्रलययुक्तसंसारसमुद्रे पुनः पुनः मग्ना भवंति इत्यर्थः ॥ १ ॥

ननु प्रत्यगभिन्नः परमात्मा जगत्जीवेश्वरादिभ्योभिन्न इतिचेत् प्रत्यक्षानुमानयोः प्रत्यक्षस्य बलवत्त्वात् तेषांदेहादीनां अनुमानेनअनात्मत्वे सिद्धेपि अहंजीवइति वाप्रत्यक्षसिद्धत्वात् एष जीवः एष आत्मा स्यात् तस्मात्परमात्माहं कथं भवेयमित्यत आह—

रज्ज्वज्ञानाद्भाति रज्जुर्यथाहिःस्वात्माज्ञानादात्मनो जीवभावः ॥
आप्तोक्त्याहि भ्रांतिनाशे सरज्जुर्जीवो नाहं देशिकोक्त्या शिवोहं ॥ २ ॥

रज्ज्वज्ञानादिति । दृष्टांतः।यथामहांधकारेकालत्रयेप्यविकाररज्ज्वज्ञानात् इयं रज्जुरिति यथार्थज्ञानाभावतया भ्रांत्यानिर्विकाररज्जुःअहिः सर्पो भाति प्रकाशते सर्पाकारेण

विभाति यथा आप्तवचनात्नायंसर्पः किंतुरज्जुरेवतत्भ्र मात्पूर्ववर्त्तमानकालेभ्रमकाले भ्रमनिवृत्तिकालेपि कालत्रये पि नायं सर्पःरज्जुरेवेतिश्रुत्वामत्वादृष्ट्वारज्जौसर्पभ्रांतिनिवृत्ति र्भवति तथा देशिकोक्त्यागुरुवचनात्महावाक्यश्रवणमन ननिदिध्यासनात् ब्रह्मात्मव्यतिरेकेण जीवोनास्तितस्मादस्त त्वं जीवः किंतु परब्रह्मैव भवतिइतिश्रुत्वामत्वानित्यापरोक्षं परंब्रह्म भूत्वा आचार्यप्रसादेनच असंभावनाविपरीतभावना निवृत्तिपूर्वकं नित्यापरोक्षब्रह्मैवाहमस्मीतिसिद्धमित्यर्थः २॥

ननुप्रत्यक्षतया प्रतीयमानस्यप्रपंचस्यकथमसत्यत्वंसंभवे दित्याशंक्य स्वप्नदृष्टांतेन तस्यासत्यत्वादिति परिहरति—

आभातीदं विश्वमात्मन्यसत्ये स
त्यज्ञानानंदरूपे विमोहात् ॥ नि
द्रामोहात्स्वप्नवत्तन्नसत्यं शुद्धः पू
र्णो नित्य एकः शिवोहम् ॥ ३ ॥

आभातीदमिति । विश्वं विविधाकारं सर्वपरिदृश्यमानमि

दं देवमनुष्यपशुपक्षिमृगतिर्यगादिरूपं ब्रह्मादिपिपीलिकां स्थावरजंगमात्मकं सकलं जगत् असत्यरूपं विमोहा अज्ञानात् माययासत्यज्ञानानंदरूपे आत्मनि ब्रह्मणिकाल येप्यसत्यमेव सत्यमिव भाति प्रकाशते । अत्र दृष्टांतमा यथा निद्रामोहात् निद्रास्वरूपात् मायापरवशात् पुरुष जीवस्य असत्यः स्वप्नः सत्यमिवाभाति प्रकाशते । तथ असत्यमिदं जगदात्मस्वरूपं न भवति । अनात्मैव । किं शुद्धः शुभ्रो ज्योतिषां ज्योतिरितिश्रुतिः। पूर्णः।सर्वव्याप सर्वभूतांतरात्मेति श्रुतेः । नित्यः दृढः एकः अद्वितीय एकमेवाद्वितीयं ब्रह्मेतिश्रुतेः । शिवः एवंभूत आत्मा सोऽ मस्मीत्यर्थः ॥ ३ ॥

ननु अहंजातोऽहं बालोऽहं युवाऽहंवृद्धोऽहंनष्टोऽहंकर्त्ता ऽहं भोक्ताऽहं सुख्यहं दुःख्यहंपश्यामिगच्छामीत्यादि अनु भूयमानस्य ममात्मत्वं कथमितिशिष्याभिप्रायंमनसि निधा य गुरुः हेशिष्य जरामरणादिदेहधर्मःशब्दस्पर्शरूपरसगंध इंद्रियधर्मः क्षुत्पिपासादिप्राणधर्मः संकल्पविकल्पौ मनोधर्मः

निश्चयानुसंधानादिबुद्धिधर्मः विचारणावधारणादिचित्त धर्मः कर्तृत्वभोक्तृत्वादिअहंकारधर्मः ज्ञातृत्वानुभवितृत्वादि अंतःकरणधर्मः आत्मधर्मो न कश्चिदित्याह—

नाहं न जातो न प्रवृद्धोन नष्टो देह
स्योक्ताः प्राकृताः सर्वधर्माः ॥ कर्तृ
त्वादिश्चिन्मयस्यास्ति नाहंकार
स्यैव ह्यात्मनो मे शिवोहम् ॥ ४ ॥

नाहमिति। नाहं जातः किंतु षड्विकारशून्यत्वात् जायतेऽस्ति वर्द्धते विपरिणमते अपक्षीयते विनश्यतीति षड्भावविकारा देहधर्माः मम धर्मो न किंचन। किंतु अहंकारस्यैव प्रकृतिधर्माः। नैवचिन्मयस्य सच्चिदानंदस्वरूपस्य सर्वसाक्षिणः ममैते धर्माः कदाचित्किंचित्कश्चित् धर्मलेशो नास्ति। अस्मिन्नर्थे भगवद्वचनं प्रमाणम्। नजायते म्रियते वा कदाचिन्नायं भूत्वाभविता वा नभूयः। अजो नित्यःशाश्वतोऽयं पुराणोनहन्यते हन्यमाने शरीरे ॥ १ ॥ इति। असंगो ह्ययंपुरुष इतिश्रुतेः। यद्यद्भौतिकं यद्यज्जन्मादिकम् तत्तदनात्मेतिसि

द्दम् ।तस्मात् शिवोहमस्मीतिकर्तृत्वादिअहंकारधर्मत्वात् मायापरवशात् भ्रांत्यामयाअनुभूयमानत्वादिदानीं तु सद्गुरूपदेशेन ज्ञात्वा तस्मादहमात्मा ब्रह्मैवेत्यर्थः ॥ ४ ॥

मुमुक्षुणामविद्यानिवृत्त्यर्थं ज्ञानदार्ढ्यार्थं च निःसंशयज्ञानार्थं पुनर्वदति—

मत्तो नान्यत्किंचिदत्रास्ति दृश्यं
सर्वं बाह्यं वस्तु मायोपक्लृप्तम् ॥
आदर्शांतर्भासमानस्य तुल्यं मय्य
द्वैते भाति तस्माच्छिवोहम् ॥ ५ ॥

मत्तो नान्यदिति । मत्तोऽन्यत् इतरत् कदाचिदपि किंचिदपि नास्ति किंबहुना । स ब्रह्मा सशिवः सविष्णुःसेंद्रः सोऽक्षरः परमः स्वराट् स प्राणः स कालाग्निः स चंद्रमाः इत्यादि श्रुतिभ्यः प्रतिपादितत्वात् । एकमेवाद्वितीयं ब्रह्म सिद्धंसोहमस्म्येव। मय्येव सकलं जातं मयिसर्वंप्रतिष्ठितम्।मयि सर्वं लयं याति तद्ब्रह्माद्वयमप्यहम्।अत्रदृष्टांतः। वस्तुमायोपक्लृप्तं आदर्शांतर्भासमानस्य तुल्यं यथाऽऽदर्शेप्रति

बिंबितं मुखं ग्रीवास्थमुखंभवति।आदर्शेमुखं नास्ति तथापि तत्प्रतिबिंबितं मुखं ग्रीवास्थमुखादन्यन्नास्ति । आदर्शस्य स्वच्छत्वात् तस्मिन्प्रतिबिंबितं मुखाभासं मुखमेव न वास्तवं बिंबभूतं यथार्थभूतं मुखं न भवति । तथाअंतःकरणस्यावि द्याकल्पितस्य स्वच्छद्रव्यत्वात् तस्मिन् प्रतिबिंबितं चैतन्यं जीवचैतन्यं तत्प्रतिबिंबं ब्रह्मात्मस्वरूपमेव वास्तवस्वरू पमेव बुद्धौ स्वच्छत्वेन साक्षिबिंबग्राहकत्वात् साक्षिचिदा भासयोस्तादात्म्याध्यासः तस्मिन्निवृत्ते कृतकृत्यो भवति विज्ञाय देवं सर्वपाशोपहानिः तमेव विदित्वातिमृत्युमेति नान्यःपंथाविद्यतेयनाय भिद्यते हृदयग्रंथिश्छिद्यंतेसर्वसंशयाः इत्यादिश्रुतेः । ननु दर्पणमुखयोर्जपाकुसुमस्फटिकयोः साव यवयोः प्रतिबिंबदर्शनात् नीरूपस्यात्मनः कथं प्रतिबिंब तयाभ्युपगम इत्याशंक्याह ॥ जानुप्रमितजलेमेघस्यमहन क्षत्रोदराकाशस्य प्रतिबिंबदर्शनात्।चएवं निरवयवस्यात्मनः प्रतिबिंबो भवति।ननुआत्मनःप्रतिबिंबेकिंप्रमाणमिति चेत् शृणु । रूपंरूपंप्रतिरूपोबभूवदृश्यतेजलचंद्रवत्मायाभसेनं जीवेशौ करोतीत्यादि वदता वेदांतप्रमाणराजेन तस्यैव

सर्वप्रतिबिंबत्वेनाऽभिषिक्तत्वात् अतः अंतःकरणस्या विद्याकल्पितत्वात् साक्षिभास्यत्वात् उत्पत्तिमत्त्वात् जड त्वात् अज्ञानकार्यत्वात् सोपाधिकत्वात् । तस्मात्प्र तिबिंबितं चैतन्यमेव । तथापि आदर्शाभावे मुखाभावः अंतःकरणाभावे प्रतिबिंबाभावः प्रतिबिंबाभावे जीवत्वा भावः तदभाव ईश्वरत्वाभावः तदभावे मायाऽविद्याभावे तयोरभावः तस्मात् नित्यशुद्धबुद्धमुक्तपरमानंदाद्वयं ब्रह्मै वाहमहमस्मीति सर्ववेदांतसिद्धांतोयम् । नान्यत्पश्यति नाऽ न्यच्छृणोति नान्यत् वदति तदेव भूमायोवै भूमास एव सुखं यदन्यत्तदल्पं एतस्यैवानंदस्यान्यानि भूतानि मात्रा मुपजीवंति । तस्मिन्सर्वाणिभूतानि आत्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः इत्यर्थः ॥ ५॥

हरिः ॐ तत्सदिति श्रीमद्भगवत्पाद पूज्यश्रीमच्छंकराचार्यविरचितनिर्वा णपंचकंश्रीमत्परमहंसपरिव्राजकश्री स्वामिनित्यानंदसरस्वतीविरचितनि र्वाणपंचकविवृतिसमेतंसंपूर्णम् ॥ ५ ॥

॥ श्रीः ॥

# अथ मनीषापंचकम् ।

श्रीगणेशाय नमः ॥ अथ श्रीमनीषापंचकं प्रारभ्यते॥
श्रीमद्यतीन्द्रमानम्य जगन्नाथमुनिं गुरुम्॥मनीषापंचकव्याख्या तन्यते मधुमंजरी॥१॥ तत्रादौ कथा निरूप्यते । सत्याचार्यस्य गमने कदाचिन्मुक्तिदायकम्॥काशीक्षेत्रं प्रति सह गौर्यामार्गेतुशंकरम्॥१॥अंत्यवेशधरं दृष्ट्वा गच्छगच्छेति चाब्रवीत्॥शंकरः सोपि चांडालस्तं पुनः प्राहशंकरम्॥२॥ अस्यार्थः । कदाचित् मुक्तिदायकं काशीक्षेत्रं प्रतिआचार्यस्य शंकराचार्यस्यगमनेसतिमार्गेगौर्या सहशंकरमन्त्यवेषधरं चांडालवेषधारिणं दृष्ट्वा गच्छगच्छेति च अब्रवीत् उक्तवान्। तं शंकरं प्रतिनाम आचार्यं प्रति चांडालोपिसः शंकरः पुनः प्राह प्रत्युत्तरं दत्तवान् । किं तत् तथाहि—

अन्नमयादन्नमयमथ वा चैतन्यम
व चैतन्यात्॥द्विजवरदूरीकर्तुंवांछ
सि किं ब्रूहि गच्छगच्छेति ॥ १ ॥

अन्नमयादिति। अद्यते यज्जनैस्तदन्नं अनुभवति च भू
नि यत्तदन्नम्। अद भक्षण इतिधातोरन्नशब्दस्योत्पन्नत्वा
अदन्तियच्च भूतानितस्मादन्नंतदुच्यतेइतिश्रुतेश्च । तदन्न
स्तत्प्रधानस्तद्विकारो वा स्थूलदेहोऽन्नमय इत्युच्यते। त
दन्नमयाच्चंडालत्वजातिविशिष्टाद्विप्रत्वजातिविशिष्टाद्वा अ
मयमुक्तलक्षणं स्थूलदेहमन्यतरजातिविशिष्टं दूरी
दूरतः परिहृत्य गंतुंहेद्विजवर जन्मनाजायतेशूद्रःकर्मणा
यते द्विजः।वेदाध्यायी भवेद्विप्रो ब्रह्म जानातिब्राह्मणइति
रणात्। द्विजानांद्विजन्मनांकर्मिणांवा मध्ये वरःश्रेष्ठःअ
तकर्मीत्यर्थः । गच्छगच्छेति वचसा वांछसि अभिल
मनःपूर्वकत्वात् वाग्व्यापारस्य।यद्धि मनसा ध्यायति त
चा वदति वाङ् मे मनसिप्रतिष्ठितामनोमे वाचिप्रतिष्ठि
इत्यादिश्रुतिभ्योवाग्व्यापारस्य मनोव्यापारपूर्वकत्वंसिद्ध
तदुक्तं भाष्यकृता श्रीविष्णुदिव्यसहस्रनामभाष्ये।मनसा
चा अग्रे संकल्पयत्यथ वाचाव्याहरतियद्धिमनसाध्याय
तद्वाचा वदति इतिश्रुतिभ्यांसंस्मरणंध्यानंचनामकीर्तनए

तर्भूतमिति किं ब्रूहीति काकुस्वरेण आक्षेपःकृतः । पक्षांतरमवलंबयत्यथ वेति । अथ वा उत चैतन्यमेव चैतन्यात् । न च भिन्नः चैतन्यधर्मः चेतनस्याद्वितीयत्वेन व्यक्तिभेदस्यानंगीकारेण जातेरनंगीकारात् । तच्च चैतन्ये कूटस्थरूपं प्रतिबिंबरूपमवच्छिन्नरूपमेव नान्यत्। तादृशादेव चैतन्यात् पूर्वोक्तोभयजातिविशिष्टस्थूलदेहांतर्वर्त्तिनो दूरीकुर्तुं वांछसि । किं ब्रूहि गच्छगच्छेति पूर्ववदनुषज्यते ॥ १ ॥

द्वेधा विकल्पो द्वितीयविकल्पमादौपरिहरन् प्रतिबिंबावच्छिन्नचैतन्याभ्यां तयोश्चैतन्ययोर्दूरीकरणेच्छा न युज्यत इति क्रमेण सदृष्टांतमाह—

किं गंगांबुनि बिंबितेंबरमणौ चंडालवाटीपयःपूरे वांतरमास्तिकांचनघटीमृत्कुंभयोर्वांबरे ॥ प्रत्यगवस्तुनि निस्तरंगसहजानंदावबोधां

बुधौ विप्रोयं श्वपचोयमित्यपि
महान्कोयं विभेदोत्तमः ॥ २ ॥

किमिति । गंगांबुनि आर्यावर्त्तक्षेत्रे काश्यादिपुण्य-नगरप्रांते देवतामनोहारिणी विष्णुपदोद्भवा भागीरथी जाह्नवीत्यपरपर्यायनाम्नी विलसति गंगातस्याः सर्वपाप-क्षयकरं परममोक्षप्रापकं च यदंबु जलं तस्मिन् अंबर-मणौ अंबरे नभसि मणिरिव दीप्यति स येन विराजमान-त्वादंबरमणिः सूर्यः तस्मिन् बिंबिते प्रतिबिंबिते सति प्रतिच्छायया दृश्यमाने सतीति यावत् । तथैव चंडालवाटीपयःपूरे चंडालाः श्वपचास्तेषां वाटी वीथी तस्यां पयःपूरं चर्मक्लेदनादिना दुर्गन्धं दुर्मलिनंजलं तस्मिन् बिंबिते सतीत्यनुषज्यते । अंतरं भेदोऽस्ति विद्यते किमित्याक्षेप उभयत्रापि योज्यः । नांतरमनु भूयते । विद्वदविद्वत्साम्येनेत्याक्षेप्तुराभप्रायः । एवं प्रति बिंबपक्षांगीकारे भेदभ्रमस्यानवकाशं प्रदर्श्यावच्छिन्नपक्षे

।पितं दर्शयति । कांचनेन सुवर्णेन निर्मिता घटी कुंभः कांचनः मृदाप्रसिद्धया गंधादिगुणवत्या निर्मितः कुंभो मृत्कुंभस्तयोस्ताभ्यामवच्छिन्नमाच्छादितमंबरं नभो यत्र तस्मिन् अंबरेंतरमस्तिकिमित्याक्षेपः। नास्त्येवेति तात्पर्यम् अत्रोभयपक्षयोः प्रतिबिंबयोरवच्छिन्नयोर्वा बिंबेन वाऽनवच्छिन्नेनप्रतिबिंबाभ्यामवच्छिन्नाभ्यां वा बिंबस्याऽनवच्छिन्नस्य प्रतिबिंबयोरवच्छिन्नयोर्वा परस्परं न कदाचिद्भेदगंधस्यावकाशः । व्यवहारभेदस्योपाधिपरामर्शमंतरेणाविभाव्यमानत्वात् । विचाराभावजीवस्य द्वैतमिथ्यात्वमस्य विचारवद्भिर्न वस्तुत्वमवसीयते । किंतु विचारविकलैरेवेत्यतो विचारवता भवता कथमुच्यते गच्छगच्छेतीत्यभिप्रायः। संप्रति दृष्टांते सोपाधिकयोरन्योन्यमनुपाधिकेन ताभ्यां तस्य च भेदाभावेप्युपाधिभूतयोरार्यावर्तादिपुण्यापुण्यक्षेत्रयोरथ च तत्स्थगंगादिपुण्यापुण्यजलयोर्भेदस्य विद्यमानत्वात् दार्ष्टांतिकेऽपि विप्रत्वाविप्रत्वजातिविशिष्टयोः स्थूलसूक्ष्मदेहयोस्तत्संस्कारतदभावविशिष्टयोरंतःकरणयोश्चभेद

स्यानुभूतत्वात् । विमत्वजातिविशिष्टतत्संस्कारोपेतदे हतदंतर्वर्त्यंतःकरणाभ्यां तज्जातिरहिततत्संस्कारशून्यदेह तदंतर्वर्त्यंतःकरणयोर्दूरीकरणेच्छामुक्तैवेति वदता शंकित इव पुनरप्यध्यस्तप्रपंचविधुरे परमात्मनिविज्ञाते न किंचि-दन्यद्विद्यत इति । यत्र त्वस्य सर्वमात्मैवाभूत्केन कं पश्ये दित्यादिश्रुतिमवष्टभ्य सर्वात्मकत्वमात्मनोऽभवत् । उपा धिदृष्ट्यापि तद्दूरीकरणेच्छा नघटिष्यते इति प्रथमं विकल्पं परिहरति । प्रत्यग्वस्तुनीति । प्रातिलोम्येन मिथ्याध्यस्त सर्वप्रपंचवैलक्षण्येन अंचति प्रकाशयति इतिप्रत्यक् परमा त्मा सच वस्तु अनध्यस्तात्मस्वभाववत्त्वेसतिकल्पितसमस्त वस्त्वधिष्ठानभूतः तस्मिन्प्रत्यग्वस्तुनि । किंच निर्गतप्रपंच रूपस्तरंगोयस्मात्सहजानंदावबोधांबुधेः सहजस्वभावः आनंदः सुखम् । अवबोधः स्फुरणंस्वभावभूतोनकेनापिनिर्व र्तित आनंदश्चासाववबोधश्चेति सहजानंदावबोधः सएवांबु धिरिवांबुधिरपर्यंतत्वात् तस्मिन् निस्तरंगसहजानंदावबो धांबुधौ प्रत्यग्वस्तुन्यहमित्यनुभूयमाने सतीति शेषः । वि

मोऽयं द्विजातिरध्ययनशीलः श्वपचोऽयं चांडालः पशुघ्ना तक इति च इयत्तापरिच्छेदशून्योऽयं विभेदभ्रमः द्वैतभ्रांतिकः कुतःसंभवति न कुतोपीत्यर्थः । प्रत्यगेकरसस्य वस्तुनो निष्प्रपंचोक्तेरिति भावः ॥ २ ॥

एवं केवलपारमार्थिकदृष्टिमवलंब्याऽऽक्षिप्तः सन् आचार्योयं देवस्तारकोपदेष्टा पूर्णपुरुषो विश्वेश्वरो भवितुमर्हतीति निश्चित्य यथोक्तमेवमेतत्। एतादृशदृष्टिमत्सु भवादृशेषु नास्माकं चंडालत्वादिप्रतीतिरित्यभिप्रेत्य जाग्रदित्यादिभिः पंचभिः श्लोकैः स्वानुभवं निरूपयति। तत्र तावच्चतुर्षु वेदेषु यानि प्रसिद्धानि प्रज्ञानं ब्रह्म अहं ब्रह्मास्मि तत्त्वमसि अयमात्माब्रह्मेत्येवंरूपाणि क्रमेण ऋग्यजुःसामाथर्वणोपनिषद्गतानि महावाक्यान्यर्थतोऽनुक्रामति । जाग्रदित्यादिना—

जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या
संविदुज्जृंभते याब्रह्मादिपिपीलि
कांततनुषु प्रोताजगत्साक्षिणी ॥

सैवाहंनचदृश्यवस्त्विति दृढाप्रज्ञा
पियस्यास्ति चेच्चांडालोस्तुसतु
द्विजोस्तुगुरुरित्येषामनीषामम ॥ १ ॥

अस्यायमर्थः । यस्यापि कस्यचित्पुरुषविशेषस्य दृढ-
प्रज्ञाऽस्ति चेत्सपुरुषश्चंडालोद्विजोवास्तु गुरुरित्येषाममनी
षेत्यन्वयः । अत्र सैवाहं नचदृश्यवस्त्विति प्रज्ञायाःप्रकार
उक्तः । स्फुटतरेति संविदः सर्वप्रसिद्धिद्योतनार्थम् । जानामी
त्यादिसंव्यवहारेषु प्रज्ञानस्यविजृंभमाणत्वात् । प्रज्ञानानु
भवविहीनस्य लोष्टवत् नरसमाकृतेःशास्त्रार्थविचारे अनधि
काराच्च । अथवा स्फुटतरेति संविदोऽनावृतत्वमुच्यते ।
तस्याः सर्वाधिष्ठानतया सर्वप्रकाशकत्वेनावरणाज्ञानस्यापि
भासकत्वात् । तमेव भांतमनुभाति सर्वमित्यत्र श्रुतौ सर्व
शब्देनाऽऽवरणस्यापि विवक्षितत्वात् । चैतन्यप्रसिद्धियो
तनं तु यच्छब्देनभवति । ननुयच्छब्देनचैतन्यस्यप्रसिद्धिर्वि
वक्षिता चेत्तर्हिसाप्रसिद्धिःकेत्याकांक्षायामाह । जाग्रत्स्वप्नसु

षुप्तिष्विति । इंद्रियैरर्थोपलब्धिर्जागारितम् । करणेषूपसंहते षु जागारितसंस्कारजप्रत्ययः स्वविषयः स्वप्नः । सर्वप्रकार कज्ञानोपसंहारे बुद्धेः कारणात्मनावस्थानं सुषुप्तिः। इत्येवं लक्षणका जाग्रदाद्यवस्थाः प्रसिद्धाःतासुप्रसिद्धास्ववस्थासु संविदपिप्रसिद्धा । यथा प्रसिद्धाऽर्कान्नाद्भुतइ(?) व चंद्रमाः एवं प्रसिद्धास्ववस्थासु संविदपि प्रसिद्धा।नन्वेवंशास्त्रकृतपरि श्रमाणां संवित्प्रसिद्धिरस्तुअतिरिक्तानां कथमिति चेदुच्यते। शब्दांतरेण व्यवहृतत्वादिति। संवित्प्रज्ञानं चैतन्यं बोधः सा क्षिकूटस्थः स्वयमात्मेत्येवंप्रकारकैःशब्दैर्व्यवहर्तुमसंस्कृता अपिदेशभाषादिसांकेतिकशब्दैरात्मानं चैतन्यरूपं सर्वसंव्य वहारसाधकत्वेन व्यवहरंति। ज्ञापकंच तेषां वर्तनं विजाना मीत्यादि । तत्र विजानामीत्यादिव्यवहारो बोधैकहेतु क इत्यनुमानादिस्वप्रमाणेनाविजानंतोऽपि प्रसिद्ध्या जा नंत्येव । इदानीं ज्ञानमास्ति व्यवहारोप्यस्ति इदानीं तु ज्ञानं नास्ति व्यवहारोपि नास्ति इतिअन्वयव्यतिरेकेज्ञानं विवेकिनांगुरुमुखात् सिद्धमपि अविवेकिनामनुभवतएवासिद्धं

तद्यथा चंद्रमा भगवतईश्वरस्यहृदयं नेत्रमित्यादिरूपेणशिष्टै र्विज्ञातोपि मूढैर्ज्ञात एवस्वप्रकाशत्वेन शिशिरकरत्वेनमंडला द्याकारेण च। एवमेव संवित्स्वतःसिद्धास्वप्रकाशेत्यादिना लिंगासिद्धिकांत्यादिविशिष्टानुभवविवेकेनाविज्ञातापिसंवित् व्यवहारसाध्यात्वप्राधान्येन विज्ञाता भवति । तस्मात् विवेकविकलानामप्यात्मसंवित्प्रसिद्धिरस्तीति बोद्धव्यम् । व्यवहारबलेनेत्यभिप्रेत्याह । उज्जृंभित इति । उदधिकं यथास्यात्तथा जृंभते उल्लसति । व्यवहारहेतुतया प्रकाशत इत्यर्थः।यद्वा उदपि जृंभत इतिहेतुः।संवित्प्रसिद्धौ विद्वत्स्व विद्वत्सुचाहमिति सर्वदा भानातद्विद्वांसो हिवयंस्म इति जा नंति । अविद्वांसोपि तथा किंतु प्रकारांतरेण। अतएवविद्वद विद्वद्भेदः । जाग्रदित्यारभ्य उज्जृंभत इत्यंतेन इयता ग्रंथसं दर्भेण प्रज्ञानं ब्रह्मेति महावाक्यस्यप्रज्ञानशब्दस्यार्थउक्तोभ वति। अधुना ब्रह्मशब्दस्यार्थमाह । या ब्रह्मादिपिपीलिकांत तनुषु प्रोता जगत्साक्षिणीति ब्रह्माचतुर्मुखआदिर्येषां तेब्रह्मा दयः पिपीलिकाकीटविशेषोऽतो येषांतेपिपीलिकांताः ब्रह्मा

दयश्चेति पिपीलिकांताश्चेति ब्रह्मादिपिपीलिकांताः प्राणि नस्तेषां तनवःशरीराणि तासु जगतःप्रपंचस्यसाक्षिणीसाक्षा दव्यवधानेन ईक्षणकर्त्रींतिहेतोः प्रोता अनुगततयावर्तमाना याप्रसिद्धासंविद्व्याख्याता एवं ब्रह्मशब्दस्य परिपूर्णत्वमर्थमु क्त्वातेन प्रत्यगात्मन एकत्वमभिवदति। सैवाहामिति। सैवप्र सिद्धैव संविदहं अहंपदलक्षितः अहंप्रत्ययव्यवहारयोग्याश्चि दात्मा। नचदृश्यवस्तु दृशाव्याप्यत इति। दृश्यंजगत्तद्वस्तुज गतो वस्तुत्वंकल्पितसंबंधेन परमार्थवस्तुनिविद्यमानमुपपर्यते जगतः कल्पितत्वेन वस्तुतो वस्तुत्वाभावेपिव्यवहारसत्य त्वांगीकाराद्योग्यं वस्तुत्वमस्तीत्यभिप्रायः। तदहं न भवा मि दृश्यवस्तुनो जडत्वात् परिच्छिन्नत्वाच्चइति। दृढप्रज्ञादृढा संशयाभावनादिभिरबाधिताप्रज्ञामतिरज्ञानां देहात्मप्रज्ञेव यस्यकस्यचिदपि पुरुषस्य श्रुत्याचार्यप्रसादमहिम्ना अस्ति विद्यते चेद्यदि स तु पुरुषश्चंडालःपशुघातकोऽस्तुभवतुअथ वाद्विजो जात्या विप्रोस्तु गुरुःसर्वज्ञो भगवानिति। ज्ञानीत्वा त्मैवमेमतमिति स्मृतेः। तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामइत्या

दिश्रुतयश्च। एषा एतादृशी मममनीषा मदीया बुद्धिर्ममानुभ
व इति यावत्। इदमत्राकूतं यस्तु पुरुषधौरेयो जाग्रत्स्वमसु
षुप्तिषु स्फुटतरा या संविदुज्जृंभतेइतिइयता ग्रंथेनोक्तप्रज्ञान
शब्दार्थं बुद्ध एतस्यार्थस्य याब्रह्मादिपिपीलिकांततनुषु प्रो
ता जगत्साक्षिणीति एतावता ग्रंथेनोक्तब्रह्मशब्दार्थत्वं वि
ज्ञाय एतद्विज्ञानस्य फलभूतं सैवाहं न चदृश्यवस्त्वितिइयता
ग्रंथेनोक्तवाक्यार्थानुभवं कुर्वन् स्थितप्रज्ञोभूत्वा सदा समा
हितः सन् वर्तेतन तस्मिन्मम चंडालत्वादिविपरीतज्ञानं किं
तु ब्रह्मत्वमतिरेव। ब्रह्म वेद ब्रह्मैव भवति इति श्रुतेरिति। यद्य
पि सर्वमात्मेति विज्ञानात्श्वपचत्वादिप्रतीतिर्नपारमार्थिकी
तथापि व्यवहारसांकर्याऽनापत्तये व्यवहारे भट्टनय, इति
न्यायात् भावनया स्वात्मनः सर्वात्मकत्वमनुभवन् क्रि
या यावत्प्रारब्धं द्वैतव्यवहारे यथापूर्वं यथाशास्त्रं विदुषावर्ति
तव्यमिति च। लोकसंग्रहमेवापि संपश्यन् कर्त्तुमर्हसीति
स्मृतेराचार्यस्याभिप्रायांतरं विज्ञायते । ननु चंडालोऽस्तु
सतु द्विजोऽस्तु गुरुरित्येषा मममनीषेतिकथमभियुक्तैवंकुम

च्चितमितिचेन्न । आक्षेप्तुर्देवस्य चंडालवेषधारित्वात् आक्षेपस्यापि संपश्य विप्रोयं श्वपचोयमित्यपि महान्कोयं विभेदभ्रमइत्येवंरूपत्वात् उत्तरस्य चोक्त्यनुसारित्वात्।अथ परमार्थवस्तुन उपनिषदेकसमधिगम्यत्वेनवेदाधिकारिणा मेव तदनुभवस्तथापियश्च कश्चन योगभ्रष्टोगहनाकर्मणोगति रिति वचनात् किंचित् कर्मशेषतया चंडालदेहधार्यपि भवे न्नामतस्मिञ्जन्मनि न तस्याध्ययनापेक्षा जन्ममात्रेणैव प्रार ब्धकर्मणो नष्टत्वात् भूतपूर्वगत्या ब्रह्मानुभवस्य सिद्धत्वात् न तस्मिन्मम चंडालत्वादिभ्रमः।नहि ज्ञानेनसदृशं पवित्रमि ह विद्यत इति स्मृतेः। अत्रापितापिता भवति मातामातालो का अलोका देवा अदेवा वेदा अवेदास्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चांडालोऽचांडाल इत्यादिश्रुतेश्च ॥ १ ॥

इदानीं यजुर्वेदोपनिषद्गताऽहंब्रह्मास्मीति महावाक्यार्थ मभिवर्णयति ॥

ब्रह्मैवाहमिदं जगच्च सकलं चिन्मा त्रविस्तारितं सर्वं चैतदविद्यया त्रि

गुणया शेषं मया कल्पितम् ॥इत्थं यस्य दृढा मतिः सुखतरे नित्ये परे निर्मले चंडालोऽस्तु स तु द्विजो स्तुगुरुरित्येषा मनीषा मम ॥ २ ॥

ब्रह्मैवाहमिति । यस्यमतिः सुखतरे नित्येपरेनिर्मलेदृढा स तु पुरुषश्चंडालोऽस्तुद्विजोवास्तुममगुरुरित्येषामनीषेत्यन्वयः। इत्यादिविशेषणैर्विशेषिते परे किमिति दृढेत्याकांक्षायामाह । ब्रह्मैवाहमित्यादि । अहमहंशब्दप्रत्यायाभ्यामुपलक्षित आत्मा ब्रह्मैवाहं परिपूर्णःपरमात्मैव । किंच इदंसकलं समस्तंजगच्चेतनात्मकंचिन्मात्रविस्तारितं चिन्मात्रे चिदेकरसे ब्रह्मणि विस्तारितं प्रपंचितम्।केनविस्तारितमित्याशंकायामाह । सर्वं चैतदिति । एतत्परिदृश्यमानमशेषं ब्रह्मादीश्वरसहितंसर्वं जगत्त्रिगुणयात्रिगुणात्मिकया अविद्ययामायया मया अध्यक्षेणकल्पितं रचितंदृश्यमेवं प्रकारेणनिश्चित्येति शेषः।दृढप्रज्ञा दृढबुद्धिरसंभावनादिभि

नं बाधितेत्यर्थः । यस्यापि यस्य वाकस्यचित्पुरुषवरस्यअस्ति विद्यतेचेत्।इत्यनेन ज्ञाननिष्ठाया दुर्लभत्वमुक्तम्। सतु चंडालोस्त्वित्यादि स्पष्टम् ॥ २ ॥

अधुना सामशाखोपनिषदुक्ततत्त्वमसीति महावाक्यस्यार्थमाह ।

शश्वन्नश्वरमेव विश्वमखिलं नि-
श्चित्य वाचा गुरोर्नित्यं ब्रह्म निरंत
रं विमृशता निर्व्याजशांतात्मना ॥
भूतं भावि च दुष्कृतं प्रदहता सच्चि
न्मये पावके प्रारब्धाय समर्पितं
स्ववपुरित्येषा मनीषा मम ॥ ३ ॥

शश्वदिति।अखिलं जगत् कारणं सत्तामात्रं वस्तुयन्निर्दिष्टं सदेवसौम्येदमग्रआसीदित्यादिना तदेव त्वंनततोभिन्नोऽसि । भेदस्य मिथ्यात्वात् वस्तुन एकरूपत्वादित्युपदेष्टुराचार्यस्य वाचा वचसा ब्रह्म परिपूर्णवस्तु निरंतरंस्वात्म

नोभिन्नंनिश्चित्य निश्चयेनज्ञात्वाअखिलंसमस्तंविश्वंजगत शश्वत्सर्वदानश्वरमेवन तु नित्यमिति । नित्यंसर्वदा विमृशता आलोचयता अत एव निर्व्याजशांतात्मना निर्व्याजोनिष्कपटः शांत उपरतः आत्मांऽतःकरणं यस्य तेनभूतमतीतं भाव्यागामि चकारेण वर्तमानंच यत् दुष्कृतं दुःखानुभव कारणं पापं सच्चिन्मये अहंब्रह्मास्मीतिज्ञानस्वरूपेपावकेअग्नौ प्रदहताप्रकर्षेण दहनंकृतवतातेन पुरुषधौरेयेणब्रह्मविन्मुख्येनेति यावत् ।एवं स्वकीयं वपुःशरीरं प्रारब्धाय अवश्यं भाविफलाय कर्मणेसमर्पितं सम्यगऽर्पितंप्रारब्धाधीनंकलेवरं कृतम् ।तस्य जीवितेमरणेवा नस्वयं बुद्धिःविक्रियतइतिभावः । सतु चांडालोऽस्तु द्विजोवाऽस्तु गुरुरित्येतदनुषंगितव्यंशिष्टं स्पष्टार्थम् ॥ ३ ॥

संप्रत्यऽयमात्माब्रह्मेत्यथर्वणशाखोपनिषद्गतमहावाक्यस्यार्थमाह ।

या तिर्यङ्नरदेवताभिरहमित्यंतः
स्फुटागृह्यते यद्भासाहृदयाक्षदेह

विषया भांति स्वतोऽचेतनाः ॥ तां भास्यैःपिहितार्कमंडलनिभांस्फूर्तिं सदा भावयन्योगी निर्वृतमानसो हि गुरुरित्येषा मनीषामम ॥ ४ ॥

या तिर्यगिति।या प्रसिद्धा स्फूर्तिः स्फुरणं चैतन्यमिति यावत् । तिर्यङ्नरदेवताभिः तिर्यग्भिः पशुभिः नरैर्मनुष्यैः देवताभिर्देवैश्च अहमित्यहंप्रत्ययव्यवहारयोग्यतया अंतर्विज्ञानमयशब्दवाच्यायां बुद्धौ स्फुटमनावरणं यथा तथा गृह्यते अनुभूयते।किं च यद्भासायस्याःस्फूर्तेर्भासाप्रकाशेन हृदयाक्षिदेहविषयः हृदयं हृदिहृद्गोलके अयनमस्येति हृदयं मनःअक्षीणि इंद्रियाणि ज्ञानकर्माख्यानिदेहःस्थूलः विषयाः शब्दाद्याः वचनाद्याश्च एते सर्वे स्वतः स्वभावतः अचेतनाः जडा अपीत्यपिशब्दोध्याहर्तव्यः। भांति प्रसन्नचेतना इवेत्यर्थः।पुनर्भास्यैः प्रकाश्यैःहृदयाक्षिदेहविषयैः पिहितार्कमंडलनिभांपिहितमाच्छादितंमेघैर्यदर्कमंडलं सूर्यमंडलं

तन्निभांतत्सदृशीं स्फूर्तिं व्याख्यातां सदानित्यंयोगी निर्जितेंद्रियो भावयन्नहमिति ध्यायन्निति आत्मशब्दार्थो व्याख्यातः । यस्याःस्फूर्त्तिस्तिर्यङ्नरदेवताभिरहमित्यंतःस्फुटा गृह्यते इति । ब्रह्मणो रूपमुक्तम् । यद्भासाहृदयाक्षिदेहविषया भांति स्वतो चेतना इत्यात्मनो रूपमुक्तम् । तां भास्यैः पिहितार्कमंडलनिभां स्फात सदा भावयन्निति हि ब्रह्मात्मनोरेकत्वमुक्तम् । यच्छब्दद्वयेन स्फूर्तिं समष्टिव्यष्ट्युपाधिविशिष्टां लक्षयित्वा तच्छब्देनैकान्वयेन तस्य योजितत्वात् । एवं निर्वृतमानसो मोक्षसुखयुक्तमानसो हि प्रसिद्धोयंःसगुरुरित्यादिस्पष्टम् । अथवाहिशब्दोहेत्वर्थेयस्मान्निवृतमानसः तस्माद्गुरुरिति ॥ ४ ॥

एवं महावाक्यचतुष्टयस्य जीवब्रह्मैक्यपरत्वमभिवर्ण्य तन्निष्ठस्य गुरुत्वमपि व्याख्याय अधुना फलितमाह ।

यत्सौख्यांबुधिलेशलेशात इमेश क्रादयो निर्वृता यच्चित्ते नितरांप्र

शांतकलने लब्ध्वामुनिर्निर्वृतः ॥
यस्मिन्नित्यसुखांबुधौ गलितधी
र्ब्रह्मैवन ब्रह्मविद्यःकश्चित्ससुरेन्द्र
वंदितपदो नूनं मनीषामम ॥ ५ ॥

यत्सौख्यांबुधीति ।यत्प्रसिद्धंविद्वत्सौख्यंसुखमंबुधिःसमुद्र इवसमुद्रःअपर्यंतत्वात् ।एतस्यैवानंदस्यान्यानि भूतानि मा त्रामुपजीवंतीति श्रुतेः ।तस्य सौख्यांबुधेर्लेशलेशतःसूक्ष्मात् सूक्ष्मतरात् लेशमात्रादित्यर्थः । इमेप्रसिद्धाःशक्रादयःइंद्रा दयः ब्रह्मबृहस्पतिप्रभृतयः आदिशब्देनोच्यंते।निर्वृता मुक्ता आनंदिनो जाताइत्यर्थः।यत्सुखंचित्तेऽतःकरणे नितरामत्यं तंप्रशांतं कलनंचलनंयस्मिन्तत्तथा तस्मिन् सतिलब्ध्वा प्रा प्यअपरोक्षतया अहमित्यनुभूयेत्यर्थः। सुमतिर्मननशीलोनि र्वृतोमुक्तो भवतीत्यर्थः । यस्मिन्योगिप्रत्यक्षगम्येप्रसिद्धेति सत्यसुखांबुधौ सुखमेवांबुधिःसुखांबुधिः नित्यश्चासौ सुखां बुधिश्चेतिनित्यसुखांबुधिः । सुखस्यविषयजनितस्यवृत्त्यधी

नतयाक्षणिकत्वमपि अविषयजानितस्य वृत्त्यधीनत्वाऽभावा
न्नित्यसुखत एवापरिच्छिन्नत्वं चेतिविज्ञेयम् । तत्रतास्मिन्नि
त्यसुखांबुधौ गलिता भ्रष्टा विलीनेत्यर्थः । धीर्बुद्धिर्ब्रह्माका
रवृत्तिरिति यावत् यस्य सतथा सब्रह्मैवब्रह्मस्वरूप एवनब्र
ह्मवित् ब्रह्मवेत्तीति ब्रह्मवित् सनभवति वृत्तेरुपरतत्वात् ।
वृत्त्यधीनं हि वेद्यत्वं वेदितृत्वं चयएतादृशःकश्चित्इत्यनेनब्र
ह्मविन्निर्विकल्पसमाधिमान् लोके दुर्लभतर इतिगम्यते।सर्व
सिद्धो ब्रह्मविद्वरिष्ठः सुरेन्द्रवंदितपदः सुराः देवाःतेषामिंद्रः
स्वामी शतमखःतेन वंदितं नमस्कृतंपदं पादोयस्यसतथानू
नंसत्यमास्मिन्नर्थे न संशयः एवं ममनीषेतिस्पष्टम्॥५॥

मनीषापंचकस्यैवं कृता टीका मनोहरा ।
बालगोपालेंद्रनाम्ना मुनिना मधुमंजरी ॥

इति श्रीमनीषापंचकं व्याख्यासहितं संपूर्णम् ।

---

श्रीः ।

# अथ ब्रह्मविदाशीर्वादपद्धतिः ।

श्रीगणेशाय नमः ॥ हरिः ॐ ॥ अथ ब्रह्मविदाशीर्वाद पद्धतिर्विद्यारण्योक्ता ॥ हिरण्यगर्भादिस्थावरांतेषु शरीरेषु यदेकंचैतन्यमस्तितदेवाहमस्मीतिदृढज्ञानसिद्धिर्भूयात् । १ ॥ लयविक्षेपकषायरसस्वादेभ्यो रक्षितं चित्तमविघ्नेन ब्रह्मण्यव स्थितं भूयात् ॥ २ ॥ नित्यनिर्विकारासंगाद्वितीयपरिपूर्ण सच्चिदानन्दस्वप्रकाशब्रह्मानुभवसिद्धिर्भूयात् ॥ ३ ॥ अहमादिदृश्यं विलक्षणात्मप्रत्ययानुभूतप्रत्यक्चिन्मात्रानुभवसिद्धिर्भूयात् ॥ ४ ॥ सजातीयविजातीयस्वगतभेदरहिताखंडसच्चिदानंदानुभवसिद्धिर्भूयात् ॥ ५ ॥ नित्यशुद्धबुद्धसत्यपरमानंदाद्वितीयब्रह्मात्मानुभवसिद्धिर्भूयात् ॥ ६ ॥ स्वगतादिभेदरहितसच्चिदानंदलक्षणब्रह्माभिन्नकूटस्थप्रत्यक्चैतन्यसर्वसाक्षीति चिद्रूपानुभवसिद्धिर्भूयात् ॥ ७ ॥ स्वात्मनोन्यत्वेन प्रतिभातंसकलंसाक्ष्यं जगत्स्वाविद्याविल

सितत्वेन स्वानन्यत्वात् स्वात्ममात्राद्वितीयब्रह्मात्मानुभ-
वसिद्धिर्भूयात् ॥ ८ ॥ असंभावनाविपरीतभावना-
हितत्वेन करतलामलकवदहंब्रह्मास्मीत्यप्रतिबंधापरोक्षब्र-
ह्मात्मसाक्षात्कारो दृढीभूयात् ॥ ९ ॥ यो ब्रह्मादिस्तंब-
र्यंतानां सर्वेषांप्राणिनांदेहमध्येतत्तद्देहसाक्षित्वेनभासमानःप-
रिपूर्णात्मास्तिसोयं परमात्माकेवलं मुमुक्षोःपुरुषस्यमत्स्वरू-
पमित्येवंरूपात्मसाक्षात्कारो दृढीभूयात् ॥ १० ॥ वास-
नाक्षयमनोनाशतत्त्वज्ञानाभ्यासवशाज्ज्ञानरक्षा तपःसिद्धिः
सर्वसमतत्त्वं दुःखनिवृत्तिः सुखाविर्भाव इत्येतत्पंचप्रयोजन-
सिद्धिर्भूयात् ॥ ११ ॥ मैत्रीकरुणामुदितोपेक्षेतिसद्भाव-
नापाटवेन रागादिदुर्वासनाक्षयः सम्यक् भूयात्॥ १२॥नि-
रंतरमात्मानुसन्धानवशान्मनसो वृत्तिरूपपरिणामपरित्यागे-
न निरुद्धताकारेण परिणामो दृढीभूयात्॥ १३ ॥ शमादिपूर्व-
कश्रवणमनननिदिध्यासनाभ्यासबलाद्विषयासक्तिः प्रज्ञामां-
द्यकुतर्कौ विपर्ययदुराग्रहश्चेति वर्तमानप्रतिबन्धचतुष्टयनि-
वृत्तिद्वाराप्रतिबंधापरोक्षब्रह्मसाक्षात्कारोदृढीभूयात्॥ १४॥

उपक्रमादिषड्विधलिंगैरशेषवेदांतानामद्वैते ब्रह्मणि तात्पर्या वधारणम्भूयात् ॥ १५ ॥ गुरुमुखहृतस्याद्वितीयवस्तुनो वेदानुगुणयुक्तिभिरनवरतमनुचिंतनं भूयात् ॥ १६॥ विजातीयदेहादिप्रत्ययानंतरितसजातीयसच्चिदानंदात्मप्रत्ययप्रवाहो निरंतरं भूयात्॥ १७॥ असंगोहंचिदात्माहमितिप्रत्यगात्मनिनिर्वेशिते वृत्तिरहितेसंस्कारविशेषमात्रतया सूक्ष्मरूपेणावस्थिते चित्तेआत्मनःस्वरूपभूतपरमानंदोनिरंतरं सम्यगाविर्भूयात॥ १८॥ अहमात्मा साक्षीकेवलचिन्मात्रस्वरूपो नाज्ञानं तत्कार्यं च किंतु नित्यशुद्धबुद्धमुक्तसत्यपरमानंदाद्वयंब्रह्मैवाहमस्मीत्यभेदेनावस्थानंसमाधिरंतःसमाधिना दृग्दृश्यविवेकेबहिःसमाधिनाब्रह्मसर्गविवेकेचदृढेजाते तेन विवेकद्वयेनायं गलितदेहाभिमाने विज्ञातपरमात्मतत्त्वश्च भूयात ॥ १९ ॥देहाद्बहिःसकलनामरूपात्मकेषुवस्तुष्वपि सर्पधारादिषुरज्जुरिवव्याप्तः सच्चिदानंदलक्षणोयः परमात्मासएवपरशब्देनोच्यते अंतरहमादिदृश्यविलक्षणोस्मत्प्रत्ययालंबनभूतः प्रत्यक्चिन्मात्ररूपःसाक्ष्याख्योयो जीवात्मासएवावरश

ब्देनोच्यतेपरश्चासाववरश्चेतिपरावरः प्रत्यगभिन्नपरमात्मात स्मिन्नेवमंतर्बहिःपररूपेणावररूपेण चावस्थितेपरमार्थतः परावरेब्रह्मणि त्वंवाहमस्मि भगवोदेवतेवाहं वातत्त्वमसीतिश्रु त्यनुसारेणाहंब्रह्मास्मि ब्रह्मैवाहमस्मीतिव्यवहारेणाखंडैक्य सत्वेनसाक्षात्कृते सति तेनपरावरब्रह्मसाक्षात्कारेणास्य परावरब्रह्मसाक्षात्कृतवतस्तव हृद्ग्रंथिभेदः सर्वसंशयनिवृत्तिः सर्वकर्मक्षयरूपः परमपुरुषार्थः सम्यग्भूयात् ॥ २० ॥ अहंकारात्मनोरेकत्वभ्रमनिवृत्तिरूपो ग्रंथिभेदोदृढीभूयात् ॥ २१ ॥ आत्मादेहद्वयातिरिक्तोनवाव्यतिरिक्तत्वेपि कर्तृ त्वादिधर्मयोनिनवाअकर्तृत्वेपितस्यब्रह्मणो भेदोस्तिनवाअ भेदेपितज्ज्ञानं कर्मादिसहितंमुक्तिसाधनं केवलंवाआत्मासा क्षीकर्त्ता वासाक्षित्वेपिअस्यब्रह्मत्वंअस्तिनवाब्रह्मत्वेपितद्बु द्ध्यावेदितुं शक्यं नवाशक्यत्वेपितद्वेदनमात्रेणमुक्तिरस्तिन वाममपरमार्थतोब्रह्मत्वमस्तिनवाब्रह्मत्वेपिवाहग्रूपं मम सा क्षात्कृतं नवासाक्षात्कृतेपि इतःपरंकर्तव्यमस्तिनवाकर्तव्या भावेपि इदानींममजीवन्मुक्तित्वमस्तिनवाजीवन्मुक्ति

त्वेपि वर्त्तमानदेहपातानंतरभाविविदेहमुक्तिर्भविष्यतिनवाताव
त्याभावपि कालांतरजन्म पुनर्भविष्यतिनवेत्यादिसर्वसंशय
निवृत्तिर्भूयात् ॥२२॥ अनारब्धानामागामिजन्महेतूनामने
ककोटिजन्मार्जितानां प्रारब्धव्यतिरिक्तानां संचितकर्मणां
निवृत्तिरूपःपरमपुरुषार्थःसम्यग्भूयात् ॥२३॥ यत्पूर्णानंदैक
बोधंतद्ब्रह्माहमस्मीतिब्रह्मात्मानुभवमात्रपर्यवसानेबुद्धिर्निरन्त
रंभूयात् ॥२४॥ यस्मिन्कालेद्वैतभानं नास्तिनिद्रापिनाग
च्छातियास्मिन्काले उपलभ्यमानंयत्सुखमस्तिसब्रह्मानंदइति
ब्रह्मानंदानुभवनिरन्तरसिद्धिर्भूयात् ॥२५॥ मनोव्यापारा
भावसमयेयत्सुखंभासते तत्सुखमात्मस्वरूपमित्यात्मनिश्चयः
सम्यग्भूयात्॥२६॥ स्वस्वप्नःस्वातिरेकेणयथानास्तितथै-
वजाग्रदपि स्वातिरेकेण नास्ति तेनाद्वितीयात्मानुभवःसम्य-
ग्भूयात् ॥२७॥ वासनाक्षयमनोनाशाभ्यांनिर्वासनेवृत्तिशू
न्येचित्तेसंशयविपर्ययदोषद्वयाभावेन प्रतिबंधाभावादुत्पन्नंत
त्वज्ञानमबाधितेनसुरक्षितंभूयात्॥२८॥पंचम्यादिभूमित्रय
रूपायां जीवन्मुक्तौसंपाद्यमानायां द्वैताभासाभावेनसंशयवि

पर्यंयप्रसंगाभावादुत्पन्नतत्त्वज्ञानमबाधेनरक्षितंभूयात् २९॥
स्वप्ने स्थूलशरीराभिमानेप्यस्मिन् जागृदाद्यवस्थाचतुष्टयेश्
चिद्रूपात्मामणिषु सूत्रमिवानुस्यूततयानिरंतरं भासते सचि
द्रूपात्मैवाहमस्मीत्यन्वयव्यतिरेकाभ्यां शरीरत्रयस्यव्यावृत्तिं
तत्साक्षिचैतन्यस्यानुवृत्तिंचपश्यतो ममशरीरत्रयव्यतिरिक्ता
त्मानुभवः सम्यग्भूयात्॥ ३०॥ भगवन्तंपरमेश्वरं प्रीतिपूर्वकं
भजतो ममोपर्यनुकंपार्थेभगवान्वासुदेवआत्मभावस्थः स
न्विवेकप्रत्ययरूपेण भक्तिप्रसादस्नेहाभिषिक्तेन मद्भावनाभिनिवेश
वातेरितेन ब्रह्मचर्यादिसाधनसंस्कारवत्प्रज्ञावर्त्तिनाविरक्तां
तःकरणाधारेण विषयव्यावृत्तचित्तरागद्वेषकलुषितमिवाता
पवरकस्थेन नित्यप्रवृत्त्यैकाग्र्यध्यानजनितसम्यक्दर्शनभा
स्वताज्ञानदीपेनाज्ञानजमविवेकतो जातं मिथ्याप्रत्ययरूपं
मोहांधकारं तमोनाशयत्वित्याशीर्निरंतरं भूयात् ॥ ३१॥
परमेश्वरं प्रीतिपूर्वकंभजंतोये भक्तायेनबुद्धियोगेनसम्यग्दर्श
नलक्षणेनात्मभूतं भगवंतं परमेश्वरमात्मत्वेनोपयांति प्रति
पद्यंते तं बुद्धियोगंभगवान् वासुदेवोमेददात्वित्याशीर्निरंतरं

भूयात् ॥ ३२ ॥ असंगोऽहं चिदात्माहमितिप्रत्यगात्मनिवे शितेवृत्तिराहितेन संस्कारमात्रशेषतया सूक्ष्मरूपेणावस्थिते चित्तेआत्मनःस्वरूपःपरमानंदोनिरंतरं सम्यग्भूयात् ॥ ३३ ॥ विकारे अंतारिक्षेण स्वाध्यस्तंसर्वंसाक्षादव्यवधानेन स्वरूप बोधेनेक्षते पश्यतीतिसाक्ष्यनुभवस्सम्यग्भूयात् ॥ ३४ ॥ देहेंद्रियादिसकलजडावभासकत्वेन चिद्रूप इतिचिदात्मानु भवः सम्यग्भूयात् ॥ ३६ ॥ आत्मनिकदाचित् प्रियाभावेन परमप्रेमास्पदत्वेन चात्मापरमानंदरूप इतिआनं दात्मानुभवः सम्यग्भूयात् ॥ ३६ ॥ आभासरूपस्य वि श्वस्य भानं भासं विधेर्विनाकदाचिद्भानाभावाज्ञानरूपात्मा सर्वगतइति सर्वगतात्मानुभवः सम्यग्भूयात् ॥ ३७ ॥ अस ज्जडदुःखात्मकाहंकारादिभ्यो विलक्षणतया प्रातिकूल्येनस त्यज्ञानानंदरूपेण अंचतिप्रकाशति इति प्रत्यगात्मनः सम्य ग्भूयात् ॥ ३८ ॥ पश्चाद्भासमानस्य जडस्यप्रथमतोभास मानं चैतन्यत्वतद्वास्तवस्वरूपमिति निश्चित्य जडमुपेक्ष्याचि

न्मात्रमेव चित्तं निरंतरंभूयात् ॥ ३९ ॥ सर्वाण्येवैतानिप्र ज्ञानस्यनामधेयानि भवंतीतिवाक्येन देहेंद्रियादिसाक्षीरूपं यत्प्रज्ञानं त्वंपदार्थरूपंनिर्णीतंतदेवैषब्रह्मेत्यादिवाक्येन जग त्कारणतया निर्णीतं परंब्रह्मन चानयोरीषदपिभेदोऽस्तीत्यै तरेयमहावाक्यज्ञानासिद्धिर्निरंतरं भूयात् ॥ ४० ॥ यतः सर्वत्रावस्थितं प्रज्ञानं ब्रह्मातोमप्यवस्थितं प्रज्ञानंब्रह्मैवात्म ज्ञानत्वाविशेषादित्यैतरेयमहावाक्योक्तजीवब्रह्मैक्यज्ञानसि द्धिर्निरंतरं भूयात् ॥ ४१ ॥ आत्मसान्निधौ विद्यमानत्वे नजडरूपस्यापि देहेंद्रियादेर्भासमानत्वादात्माचिद्रूपइतिचि दात्मानुभवः सम्यग्भूयात् ॥ ४२ ॥ आत्मसहितत्वेनदुः खात्मकस्य देहादेरपि प्रियतमत्वादात्मापरमानंदरूपइत्यानं दानुभवः सम्यग्भूयात् ॥ ४३ ॥ देशतःकालतो वस्तुतः परिच्छेदरहिताद्वितीयब्रह्मानुभवसिद्धिर्भूयात् ॥ ४४ ॥ पूर्वापरपरामर्शमंतरेण सहसोत्पद्यमानस्य क्रोधादिवृत्तिवि शेषस्य हेतोश्चित्तगतसंस्कारस्यविवेकजन्यायां क्षांतिवास

नायां दृढायां सत्यां ब्रह्मनिमित्तेन क्रोधाद्यनुत्पत्तिःसम्यग्भू
यात् ॥ ४५ ॥ यस्य प्रसादादहमेव विष्णुः मय्येवसर्वंप
रिकल्पितंचेतीत्ययमात्मस्वरूपं विजानामितस्यपादारविंद
योरचंचलाभक्तिर्निरन्तरं भूयात् ॥ ४६ ॥ आचद्रूपस्य
सर्वस्य जगतश्चित्सन्निधेर्विद्यमानत्वाच्चिद्रूपात्मसर्वगतइ-
तिसर्वगतात्मानुभवः सम्यग्भूयात् ॥ ४७ ॥ सर्वार्थसाध
कंत्वे हेतुना सर्वसंबंधत्वेन चात्मा सर्वपरिपूर्णइतिपारिपूर्णा
त्मानुभवः सम्यग्भूयात् ॥ ४८ ॥ देशकालव्यवहितत्वेन
पारोक्ष्यहेतोरभावात्साधनांतरेनिरपेक्षतया स्वयंप्रकाशमानः
चिदात्मा सर्वदा स्वतःसिद्धापरोक्षरूपेत्यपरोक्षानुभवः
सम्यग्भूयात् ॥४९॥ यत्र यद्वस्त्वीक्ष्यते तेन वस्तुनान्य
त्रानन्वागतत्वेनात्माऽसंग इति असंगात्मानुभवः सम्यग्भूया
त् ॥५०॥ निरवयवत्वेनासंगत्वेन चात्मनःकेनापि संबंधा
भावादात्मा नित्यमुक्तइतिनित्यस्वरूपानुभवासिद्धिर्भूयात्
॥५१॥ अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वादात्मास्वयं

प्रकाशइति स्वयंप्रकाशात्मानुभवःसम्यग्भूयात् ॥ ५२ ॥
साधनांतरनिरपेक्षतया स्वयमेव भासमानत्वादात्मास्वयम्प्र
काश इतिस्वयंप्रकाशात्मानुभवः सम्यग्भूयात् ॥ ५३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्विद्यारण्योक्ता
ब्रह्मविदाशीर्वादपद्धतिः समाप्ता ।



# वेदान्तग्रंथ-भाषा।

ब्रह्मसूत्र—( शारीरक ) व्यासप्रणीत शंकराचार्यकृत शांकरभाष्य और गोविंदानंदकृत रत्नप्रभाटीकासहित व्यासाधिकरणमाला और शांडिल्यकृत भक्तिसूत्र स्वप्नेश्वराचार्यकृत भाष्यसमेत छपता है।

ब्रह्मसूत्र—( शारीरक ) "वेदान्त दर्शन" प्रभुदयालकृत वेदान्ततत्त्वप्रकाश भाषाभाष्यसमेत मुमुक्षुओंको अतिसुगमतासे सुबोध ज्ञानोपयोगी बहुत सरल भाषामें ... ... ४)

ब्रह्मसूत्र—( वेदान्तदर्शन ) सरल भाषाटीकामें भाष्यानुसार ... ... ... ... १)

वेदान्तपरिभाषा—शिखामणिटीका और मणिप्रभाटीका सहित... ... ... ... २॥)

वेदान्तपरिभाषा—अर्थदीपिका टीकासमेत ... १)

वेदान्तपरिभाषा—साधु गोविन्दसिंहकृत अत्यु
त्तम भाषाटीकासमेत ... ... ... १०॥)

वेदान्तसार—संस्कृतमूल और संस्कृतटीका व
भाषाटीकासमेत इसमें संपूर्ण वेदान्तका तत्त्व
रूपसार वर्णितहै ... ... ... ॥।)

वेदान्तसंज्ञा—भाषाटीकासमेत इस छोटेसे
ग्रंथके अभ्याससे वेदान्तकी संज्ञादि प्रक्रिया
जाननेसे पंचदशी आदि बडे ग्रंथोंको सुग
मतासे समझ सकेंगे ... ... ... |=)

वेदस्तुति—श्रीयुत बाबू सीतारामजीकृत भाषा
टीकासमेत श्रीमद्भागवतान्तर्गत दशमस्कं
धोत्तरार्धके ८७ अध्यायमें श्रीकृष्ण भगवा
न्‌ने श्रुतदेव ब्राह्मण और राजाबहुलाश्वको
सन्मार्गनाम वेदमार्ग उपदेश किया है अर्थात्
इस श्रुतिमें समस्तवेद ब्रह्मप्रतिपादन किया है ॥)

वेदान्त ग्रन्थपंचकम्—( वाक्यप्रदीपः वाक्य-सुधारसः हस्तामलकः निर्वाणपंचकम् मनीषापंचकम् ) यह पांचोंग्रंथ अवश्य विचारने योग्यहैं ... ... ... .... ... ॥)

वैराग्यभास्कर—श्रीस्वामि गोपालदास विरचित स्वकृत संस्कृत कारिका और भाषाटीकासमेत इसमें वैराग्यभेदादि संन्यासधर्म निषिद्धान्नत्यागात्मकधर्म और संकीर्ण धर्मादि वर्णित हैं ... ... ... ... ॥)

भागवत वेदस्तुति—श्रीधरीटीका और श्रीधरीटीकाकी बंसीधरीटीका श्रीधरानुयायिनी, विश्वनाथी, तोषिणी, नीलकण्ठी, आदि पंचटीकाओं समेत ... ... ... १)

अपरोक्षानुभूति—श्रीशंकराचार्यकृत और स्वामी विद्यारण्य मुनिकृत दीपिकासहित और पंडितरामस्वरूपजीकृत भाषाटीकासमेत

जिसमें संक्षेपसे वेदान्तप्रक्रिया सरलरीतिसे वर्णन है ... ... ... ... ॥≡)

अष्टावक्रगीता–भाषाटीकासमेत श्रीअष्टावक्र मुनि प्रणीत गुरुशिष्यसंवादमें ब्रह्मविद्याजानने्का अतिसरल सुगमोपाय ... ... १)

पंचदशगीता–भाषाटीकासमेत जिसमें श्रीमहाभारतान्तर्गत काश्यपगीता शौनकगीता अष्टावक्रगीता अध्याय ४ नहुषगीता अध्याय २ सरस्वतीगीता युधिष्ठिरगीता अध्याय ४ बकगीता धर्मव्याधगीता श्रीकृष्णगीतादिकका एकत्र संग्रहहै ... ... ... ॥)

अवधूतगीता–श्रीमत्परमयोगिवर दत्तात्रेय प्रणीता–रेशमी गुटका ... ... ।–)

देवीगीता–भाषाटीकासहित ( श्रीदेवीभागवतान्तर्गत ) शाक्तलोगोंकोपाठकरने योग्य ... ॥)

शिवगीता—पं० ज्वालाप्रसादमिश्रकृत-भाषाटीका सहित ( पद्मपुराणोक्त ) १६ अध्यायमें श्रीमद्भगवान् रामचंद्रजीको शिवजीने ज्ञानोपदेश कियाहै ... ... ... ॥=)

गणेशगीता पं० ज्वालाप्रसादमिश्रकृत—भाषाटीकासहित ( गणेशपुराणोक्त ) गाणपत्यको अवश्य पाठ करनेयोग्य ... ... ।॥)

कपिलगीता—भाषाटीकासहित श्रीमद्भागवतान्तर्गत श्रीभगवान् कपिलदेवजी अपनी माता देवहूतिको संपूर्ण ज्ञानोपदेश किया है ... ।-।)

सिद्धान्तचन्द्रिका—( वेदान्त ) ... ... ॥)

पंचदशी सटीक—पं० रामकृष्णाख्य विद्वत्कृत तत्त्वविवेक व्याख्या टीका सहित ... २)

पंचदशी—पं० मिहिरचंद्र कृत अत्युत्तम भाषाटीकासहित जिसमें—तत्त्वविवेक, द्वैतविवेक, महावाक्यविवेक, कूटस्थदीप, नाटकदीप, योग।

नन्द–आत्मानन्द ( अद्वैतानन्द ) विद्यानंद विषयानंदादिमें वेदान्तमार्ग दर्शाया है ... ३॥)

श्रीमद्भगवद्गीता–स्वामी श्रीचिद्घनानंदकृत गूढार्थ दीपिका नाम अत्युत्तम भाषाटीका मूल अन्वय पदच्छेदकेसहित मुमुक्षुगणोंको अतिसरल सुबोधयुक्त ... ... ... ६)

श्रीमद्भगवद्गीता–आनंदगिरिकृत भाषाटीका सहित जिसमें अन्वयकरके भावार्थ स्पष्ट किया गयाहै ग्लेज कागज ... ... २॥)

" रफ् कागज ... ... ... २)

संपूर्ण पुस्तकोंका "बड़ासूचीपत्र" अलग है देखना होय तो आध आनेकी टिकट भेजकर मुफ्त मँगालीजिये.

पुस्तकोंके मिलनेका ठिकाना–
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" ( स्टीम् ) यंत्रालयाध्यक्ष–बम्बई.